KÂVYAMÂLÂ, 73.




# THE SURATHOTSAVA

OF

SOMES'VARADEVA.

EDITED BY

MAHÂMAHOPÂDYÂYA PANDIT S'IVADATTA

Head Pandit and Superintendent, Sanskrit Department, Oriental College, Lahore,

AND

KÂS'ÎNÂTH PÂṆDURANG PARAB.

PRINTED AND PUBLISHED

BY

TUKÂRÂM JÂVAJÎ

PROPRIETOR OF JAVAJI DADAJI'S 'NIRNAYA SAGARA' PRESS

BOMBAY.

1902

*Price 14 Annas*

काव्यमाला ७३.

श्रीसोमेश्वरदेवविरचितं

# सुरथोत्सवम् ।




जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसाददारक-
केदारनाथकृपाङ्गीकृतशोधनकर्मणा महामहोपाध्याय-
पण्डितशिवदत्तशर्मणा, मुम्बापुरवासिपरबोपाह्व-
पाण्डुरङ्गात्मजकाशीनाथशर्मणा च
संशोधितम् ।

तच्च

मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतम् ।

१९०२



मूल्यं १४ आणकाः ।

## सोमेश्वरदेवः ।

अथ हि सुरथोत्सवमहाकाव्यकर्ता श्रीमान् सोमेश्वरदेवः कदा कतमं धरामण्डलं मण्डयामासेति मीमांसायामनेकग्रन्थपर्यालोचने प्रवृत्ते—

"अस्ति प्रशस्ताचरणप्रधानं स्थानं द्विजानां नगराभिधानम्[1] ।
कर्तुं न शक्नोति कदापि यस्य नेतापवित्रस्य कलिः कलङ्कम् ॥ १ ॥

सत्तीर्थस्य सुराश्रितेन जगता यस्योपमा स्यात्कथं
स्वाध्यायैकनिधेर्गतश्रुतिरतैस्तेनोर्वीतलेनापि वा ।
यत्संधिषु विशुद्धिवर्जितवपुर्नागोऽपि नागेस्यते
वन्दे श्रीनगरं तदेतदखिलस्थानातिरिक्तोदयम् ॥ २ ॥

हुतनयनसुखैर्मखाग्निधूमैः श्रुतिसुभगैर्बटुवृन्दवेदपाठैः ।
कलिकलितसमदं प्रदत्ते न खलु पदं विदुषां गृहेषु यत्र ॥ ३ ॥

यस्तपश्चमखाग्निभस्मतमसि स्थाने त्रिनेत्रानल-
ज्वालाप्रज्वलितप्रसूनधनुषा देवेन दत्तोदये ।
श्रीमत्ता च पवित्रता च परमामालोकयन्तः सुरा
स्वर्वासेऽप्यरसा रसामरजनव्याजेन भेजुः स्थितिम् ॥ ४ ॥

तस्मै संयमिनामिनाय मुनये नित्यं नमस्कुर्महे
यन्माहात्म्यमसह्यमाह स मुहुर्मुह्यन्मना कौशिकः ।
आविर्भूतमभूतपूर्वचरितश्रेष्ठाद्वशिष्ठात्ततः
सत्कर्मोद्धुरमध्वरस्थितिविदां स्थानेऽत्र गोत्रं महत् ॥ ५ ॥

येषामीशाधिपतिं प्रसन्नं सन्नद्धपाणिं पणिकङ्कणेन ।
त एव सम्भूतिमिहाश्नुवन्ति [कुले] गुलेचा(वा)भिधया प्रसिद्धे ॥ ६ ॥

श्रीसोलशर्मा विमले कुलेऽत्र जन्म द्विजन्मप्रवरः प्रपेदे ।
यः स्वर्गिणः सोमरसेन यागे पितॄंश्च पिण्डैरपृणत्प्रयागे ॥ ७ ॥

'सोल' सलीलमवनीमवतामसौ च
'सौवस्तिकोऽस्तीति वरं स्मरता स्मगरे ।

---

१ आनन्दपुरम्. २ देवा, मदिरा च ३ सर्पा, वेदभ्रष्टाश्च ४ भूदेवा ५. स्वामिन, सूर्याय च. ६. उलूक, विश्वामित्रश्च ७ यज्ञविद्याविदाम् ८ ईश्वर. ९. 'गुलेचा' इति स्थानाचारेण गोत्रस्यावटङ्कनाम प्रर्नाभ्यते, परं च डॉक्टर् रामकृष्णगोपाल भाण्डारकर-महाशयैस्तु १८८३–८४ वर्षाय 'रिपोर्ट' पुस्तके 'गुलेचा' इत्येव पाठ आश्रित १० अस्य मूलराजपुरोहितस्य सोलस्य सत्तासमयोऽपि मूलराजराज्यसमय एव. ११ पुरोहित

श्रीगुर्जरक्षितिभुजा किल मूलराज-
देवेन दूरमुपहूय पुरो दधे यः ॥ ८ ॥
यथा प्रतिष्ठां महतीं वसिष्ठस्तिग्माशुवंशे भगवानवाप ।
निजेन सौवस्तिकतागुणेन चौलुक्यभूपालकुले तथासी ॥ ९ ॥
विधिवद्वाजपेयं यः कलिकालेऽप्यकल्पयन् ।
कियतीं वा जपेय तच्चरिताद्भुतसंहिताम् ॥ १० ॥
ऋग्वेदवेदी च कृतक्रतुश्च दत्तान्नदानश्च जितेन्द्रियश्च ।
तिरोहिते तत्र पुरोहितेन्द्रे तदङ्गजन्माजनि ल्लशर्मा ॥ ११ ॥
यः करोति स्म चामुण्डराजाख्य नृपमाशिषा ।
हेतिप्रतापसंपन्न हविषा च हविर्भुजम् ॥ १२ ॥
श्रीमुञ्जनामा तनुजस्तदीयः स्वय स्वयभूरिव भूतलेऽभूत् ।
ब्राह्मण्यलाभाय तथा हि सद्भिरभाजि मौञ्जी रशनेव वृत्तिः ॥ १३ ॥
सद्वंशजातेन गुणान्वितेन शरासनेनेव पुरोहितेन ।
एतेन मेने भुवने न किंचिन्न दुर्लभं दुर्लभराजदेवः ॥ १४ ॥
संतापशान्तिं जगतोऽपि सोमस्तत्रन्दनश्चन्दनवच्चकार ।
पीयूषहारी हरिणाङ्कितश्च सत्यं बभाजे द्विजराजता यः ॥ १५ ॥
यस्याशीःप्रतिपादितोदययुजा श्रीभीमभूमीभुजां
क्षीरक्षालितशालितण्डुलसितं साक्षात्कृतं तद्यशः ।
येनाशाक्रमणक्षमेण त इमे मूर्तिप्रभेदाः प्रभो-
र्भस्मोद्धूलनमन्तरेण धवलाः सर्वेऽपि निर्वर्तिताः ॥ १६ ॥
भित्त्वा भानुं तत्र ताते प्रयाते पुत्रः श्रीमानामशर्मा बभूव ।

---

१. मूलराजराज्यसमयः—A. D. 937–997 इति Indian Antiquary Vol. XI. P. 219. २. अस्य चामुण्डराजपुरोहितस्य ल्लशर्मणः सत्तासमयश्चामुण्डराजराज्यसमय एव. ३. चामुण्डराजराज्यम्—A. D. 997–1010. ४ आयुधम्, दीप्तिश्च. ५ पौरुषम्, संतापश्च ६. अस्य दुर्लभराजपुरोहितस्य श्रीमुञ्जनाम्नः सत्ताधारसमयस्तु दुर्लभराजराज्यसमय एव. ७. मौञ्जी वृत्तिरिति मुञ्जवद्वर्तमानानां ब्राह्मण्यं भवतीत्यर्थः, एतेन मुञ्जस्य सदाचारत्वमुक्तं भवतीत्यर्थः. ८. दुर्लभराजराज्यम्—A. D. 1010–1022. ९. अस्य भीमराजपुरोहितस्य सोमस्य जीवनसमयो भीमराजराज्यसमय एव. १०. विष्णुना, मृगेण च. ११ ब्राह्मण्यम्, चन्द्रत्व च. १२. भीमराजराज्यम्—A. D. 1022–1064. १३. पृथिव्यादयोऽष्टौ. १४. शिवस्य. १५. अस्य श्रीकर्णराजपुरोहितस्य आमशर्मणः स्थितिसमयः श्रीकर्णराजराज्यसमय एव.

कृत्वा सम्यक्संस्थसंस्थाः क्रतूनां क्रीता कान्ता येन सैम्राडभिख्याम् ॥ १७ ॥
सदा यदाशीः परिपूर्णकर्णः श्रीकर्णनामा नृपतिः प्रचण्डम् ।
वसुंधरामण्डलमर्णवान्तं श्रान्तारिनारीनयनाम्बु चक्रे ॥ १८ ॥

दानानि तानि सदनानि च तानि शम्भो-
रम्भोजराजिरुचिराणि सरांसि तानि ।
येनामुना मुनिजनानुकृताङ्कृतानि
नित्तिश्रुलुक्यकुलसंभवभूपदत्तैः ॥ १९ ॥

धाराधीशपुरोधसा निजनृपक्षोणीं विलोक्याखिला
चौलुक्याकुलिता तदत्ययकृते कृत्या किलोत्पादिता ।
मन्त्रैर्यस्य तपस्यतः प्रतिहता तत्रैव तं मान्त्रिकं
सा संहृत्य तडिल्लता तरुमिव क्षिप्रं प्रयाता क्वचित् ॥ २० ॥

तस्मात्कुमारः सुकुमारमूर्तिर्मूर्तस्तपोराशिरिवोज्जगाम ।
स्वराजराज्योदयदायिनी वाग्उवास शक्तिरिव यस्य वक्त्रे ॥ २१ ॥

यद्वः सिन्धुवसुंधरापतिरतिप्रौढप्रतापोऽपि य-
न्नीतः स्फीतबलोऽपि मालवपतिः कारां च दारान्वितः ।
दत्तः सोऽपि सपादलक्षनृपतिः पादानतिं शिक्षितः
श्रीसिद्धक्षितिपेन सैष विभवः सर्वोऽपि यस्याशिषाम् ॥ २२ ॥

पुंशोपशोभितैर्यागैस्तडागैश्च परःशतैः ।
इष्टं पूर्तं च यश्चक्रे चक्रवर्तिपुरोहितः ॥ २३ ॥

ऋजुरोहितभ्रंशपुरोहितलस्तहृदयेव निदिव गनस्य तस्य ।
तनुभूर्मनुभूपनिप्रणीतस्मृतिसर्वस्वमवाप सर्वदेवः ॥ २४ ॥
मध्वरेष्वधित साधु सपर्यामध्वरेषु जयति स्म सुरेशम् ।
मानदानविदितापरयाच्ञो मानवानकृत चैष कृतार्थान् ॥ २५ ॥
अर्चियामयनमीयुषि तत्र क्षत्रसत्तमनमस्करणीये ।
अध्यगामि निधिरामिगनाम्ना वेदिरम्नदनु तत्तनुजेन ॥ २६ ॥

---

१. अग्निष्टोमाद्याः. २. वाजपेययाज्ञानि. ३ श्रीकर्णराजराज्यम्—A. D. 1064–1094 ४. मालवाधीशयशोवर्मणः पुरोहितेन स्वदेशभूमीं गुर्जरराज-श्रीसिद्धराजापरनामधेयजयसिंहदेवेन व्याकुलीकृतां वीक्ष्य तद्वधार्थमभिचारेण कृत्योत्पादिता, सा च अस्मत्कर्तुः पुरोधसः शान्तिमन्त्रैः प्रतिषिद्धा ऽपि तत्रैव मालवाधीशपुरोहितं संहृत्य तिरोहितेति श्रूयते ५. वनिष्टपुत्रः ६. सोमदत्तनामा. ७. यशोवर्मा. ८. आनलदेवः ९ श्रीसिद्धराजापरपर्यायजयसिंहराज्यम्—A. D. 1094–1143. १०. जलम्, दर्भाय. ११. वृहस्पतिं. १२ विष्णोः. १३. अ-ग्निमार्गे गतवति. १४. अग्निहोत्रादिः.

श्रीगुर्जरक्षितिभुजा किल **मूलराज-**
देवेन दूरमुपरुध्य पुरो दधे यः ॥ ८ ॥

यथा प्रतिष्ठां महतीं **वशिष्ठ**स्तिग्मांशुवंशे भगवानवाप ।
निजेन सौवस्तिकतागुणेन **चौलुक्य**भूपालकुले तथासौ ॥ ९ ॥

विधिवद्वाजपेयं यः कलिकालेऽप्यकल्पयत् ।
स्थितां या जपेय तच्चरिताद्भुतसंहिताम् ॥ १० ॥

ऋग्वेदवेदी च कृतक्रतुश्च दत्तान्नदानश्च जितेन्द्रियश्च ।
तिरोहिते तत्र पुरोहितेन्द्रे तदङ्गजन्माजनि **लल्लशर्मा** ॥ ११ ॥

यः करोति स्म **चामुण्डराजाख्य** नृपमाशिषा ।
हेतिप्रतापसंपन्न हविषा च हविर्भुजम् ॥ १२ ॥

श्री**मुञ्ज**नामा तनुजस्तदीयः स्वयं स्वयंभूरिव भूतलेऽभूत् ।
ब्राह्मण्यलाभाय तथा हि सद्भिरभाजि मौञ्जी रशनेव श्रुतिः ॥ १३ ॥

सद्वंशजातेन गुणान्वितेन शरासनेनेव पुरोहितेन ।
एतेन मेने भुवने न किंचिन्न दुर्लभं **दुर्लभराजदेवः** ॥ १४ ॥

संतापशान्तिं जगतोऽपि **सोम**स्तनन्दनश्चन्दनवच्चकार ।
पीयूषहारी हरिणाङ्कितश्च सत्या बभाजे द्विजराजतां यः ॥ १५ ॥

यस्याशीःप्रतिपादितोदययुजा श्री**भीम**भूमीभुजा
क्षीरक्षालितशालितण्डुलसित साक्षात्कृत तद्यशः ।
येनाशाक्रमणक्षमेण त इमे मूर्तिप्रभेदाः प्रभो-
र्भस्मोद्धूलनमन्तरेण धवलाः सर्वेऽपि निर्वर्तिताः ॥ १६ ॥

गत्वा गातु तत्र ताते प्रयाते पुत्रः श्रीमा**नामशर्मा** बभूव ।

कृत्वा सम्यक्संसंस्थाः क्रतूनां क्रीता राज्ञा येन सम्राडभिख्याम् ॥ १७ ॥

सदा यदाशी. परिपूर्णकर्णः श्रीकर्णनामा नृपतिः प्रकाण्डम् ।
वसुंधरामण्डलमर्णवान्तं वान्तारिनारीनयनाम्बु चक्रे ॥ १८ ॥

दानानि तानि सदनानि च तानि शंभो-
रम्भोजराजिरुचिराणि सरांसि तानि ।
येनामुना मुनिजनानुकृताद्भुतानि
वित्तैश्चुलुक्यकुलसंभवभूपदत्तैः ॥ १९ ॥

धाराधीशपुरोधसा निजनृपक्षोणीं त्रिलोक्याखिला
चौलुक्याकुलिता तदल्पयकृते कृत्या किलोत्पादिता ।
मन्त्रैर्यस्य तपस्यतः प्रतिहता तत्रैव त मान्त्रिकं
सा संहृत्य तडिल्लता तदमिव क्षिप्रं प्रयाता क्वचित् ॥ २० ॥

तस्मात्कुमारः सुकुमारमूर्तिर्मूर्तस्तपोराशिरिवोज्जगाम ।
स्वराजराज्योदयदायिनी वागुवास शंकोरिव यस्य वक्त्रे ॥ २१ ॥

बद्धः सिन्धुवसुंधरापतिरनिर्घ्रातप्रतापोऽपि य-
श्चीनः स्फीतबलोऽपि मालवपतिः कारां च दारान्वितः ।
दत्तः सोऽपि सपादलक्षनृपतिः पादानतिं शिक्षितः
श्रीसिद्धक्षितिपेन सैष विभवः सर्वोऽपि यस्याशिषाम् ॥ २२ ॥

कुंशोपशोभितैर्यागैस्तडागैश्च परःशतैः ।
इष्टं पूर्तं च यश्चक्रे चक्रवर्तिपुरोहितः ॥ २३ ॥

कुलपुरोहितमस्य पुरोहितत्वस्पृहयेव निदिवं गतस्य तस्य ।
तनुभूर्मनुभूपतिप्रणीतस्मृतिसर्वस्वमवाप सर्वदेवः ॥ २४ ॥

मंध्यैरेधित राष्ट्रसपर्यामध्वरेष जयति स्म सुरेशम् ।
स।मश्वरदेवकवेरवेक्ष लोकपृण गुणमासम् । ~~२५~ ॥
हरिहरसुभटप्रभृतिभिरभिहितमेत्र कविप्रवरैः ॥ ४४ ॥

श्रीसोमेश्वरदेवस्य कवितु सवितुश्च गौः ।
स तृणाभ्यवहारस्य निरासेऽपि रसप्रदा ॥ ४५ ॥

वाग्देवतावसन्तस्य कवेः श्रीसोमशर्मणः ।
धिनोति विबुधान्सूक्तिः साहित्याम्भोनिधेः सुधा ॥ ४६ ॥

---

१. वैरिदेशसमृद्धिम्. २. अमणाङ्कमण्डुलैः, अयगण्डितैश्च ३. अथ श्रीन्यक्कमा यशोवर्मणः पौत्र.. ४. अथ श्रीहर्षवंश्यो हरिहरो वीरधवलराजसमीपे मेषचतुष्क प्रथम वस्तुपालेऽमात्ये समानयन्–इति हरिहरप्रबन्धे प्रबन्धकोशे समुपलभ्यते ५. एतत्कविरचितमेव दूताङ्गदं नाम नाटकं वर्तते, तच्च 1891 A. D. समये काव्यमालायां मुद्रापितमस्माभिः.

तव वक्त्र शतपत्र सद्वर्णं सर्वशास्त्रसंपूर्णम् ।
अवतु निज पुस्तकमिव सोमेश्वरदेववाग्देवी ॥ ४७ ॥

वसिष्ठानिष्ठाया पदमिति जगत्यस्ति पटह
प्रकृष्टास्त्वेषामप्यजनिषत मुञ्जप्रभृतय ।
कुले जातोऽप्येषा शतधृतिदुहित्रा पुनरय
स्वय पुत्रीचक्रे नवनविगुणप्रीणितहृदा ॥ ४८ ॥

काव्येन नव्यपदपाकरसास्पदेन यामार्धमात्रघटितेन च नाटकेन ।
श्रीभीमभूमिपतिससदि सभ्यलोकमस्तोकसमदवशवदमादधे य ॥ ४९ ॥

कवीन्द्रपदवीस्पृहामहह तेऽपि तन्वन्ति य
द्वच श्रवणचर्कशं प्रथयति व्यथा कर्णयो ।
कवि स विरल पुनर्भुवि भवादृशो दृश्यते
सुधाभिरभिषेचन रचयतीव य सूक्तिभि ॥ ५० ॥

मन्ददृग्दर्शि कोऽपि कोऽपि विकल सालङ्कृतिर्व्याकृता
वर्षे कोऽपि वृथाश्रमो रसनिधावन्ध स कोऽप्यध्वनि ।
वक्त्रान्तर्विहरद्भिरश्चितनयाम श्रीरमभ्रूश्वर-
स्पर्धाबन्धुभिरेक एव कवते कान्यै कुमारात्मज ॥ ५१ ॥

वैदुष्य विगताश्रय श्रितवति श्रीहेमचन्द्रे दिव
श्रीप्रह्लादनमन्तरेण विरत विश्वोपकारव्रतम् ।
दृष्ट्वा तद्द्वयमत्र मन्त्रिमुकुटे श्रीवस्तुपाले कवि
सत्कीर्तिस्तुतिरिं[illegible]नवादिनि मुदामुद्गारगारभ्यधात् ॥ ५२ ॥

प्राग्वाटान्वयवारिधौ विधुरिव श्रीचण्डप प्राग्भू-
स्तसंभूतोऽद्भुततरशौचवदन चण्डप्रसादस्तत ।
सोमस्तत्तनयो नयोज्ज्वलमतिस्त्वाश्वराज पुन
पूतात्माथ तदङ्गभू गुरुतभू श्रीवस्तुपालोऽभवत् ॥ ५३ ॥

---

१ भीमदेवराज्यम्—A D. 1179-1242 [illegible]त्रिभुवनपालराज्यं च—A D 1242-1244 २ अयं कुमारात्मजा [illegible] सोमेश्वरदेव[illegible] श्रीभीमदेवसभा[illegible] ३ हेमचन्द्र[illegible] हेमचन्द्र कुमारपालराज्ये A D 1173 [illegible] ४ अयं च प्रह्लादन पण्डितसोमेश्वरदेवस्य कुमारस्य गुरु [illegible]—Indian Antiquary Vol XI. P. 221-22 [illegible]—'× × × [illegible] १११५ [illegible] [illegible] १५ [illegible] श्रीकुमर[illegible]श्रीभीमदेवपा[illegible] [illegible] × × × [illegible]कुमार[illegible] [illegible] [illegible]

उत्फुल्लमल्लीप्रतिमानकीर्तिः श्रीमल्लदेवोऽभवदग्रजन्मा ।
बभूव तस्यावरजश्च तेजःपालाभिधानः सचिवप्रधानम् ॥ ५४ ॥

श्रीवस्तुपालस्य चिरायुरस्तु दिशां प्रसादा दिशते सदा यः ।
कर्पूरकिर्मीरितकैरवश्रीरदावदातद्युतिभिर्यशोभिः ॥ ५५ ॥

क्षीणे चक्षुषि भेषजं भगवती वागीश्वरी देहिनां
देहे चित्रविचित्रभाजि शरणं श्रीवैद्यनाथः प्रभुः ।
संसारज्वरजर्जरे हृदि सदा विष्णुर्भविष्णुर्मुदे
दौर्गत्ये च जिघांसिते मतिरसौ श्रीवस्तुपालः पुनः ॥ ५६ ॥

न वदति परुषां कदापि वाचं स्पृशति परस्य न मर्म नर्मणापि ।
विरमति मतिमानमान्यचेष्टः क्वचन च नार्थिजनार्थितो विदानात् ॥ ५७ ॥

धनमनवरतक्षितीन्द्रगेहाश्रमगमशासनयत्नतोऽपि दत्ते ।
अपरमपि परोपकारकं यद्विमृशति वस्तु तदेव वस्तुपालः ॥ ५८ ॥

गतं मुधैव भवतु मा क्षतिरत्र काचिद्भूत्वा सल्प्रगुणिनापि मयानिमाश्रम् ।
मन्त्री नये च विनये च परीक्षितोऽयं दृष्टं न दुष्टमिह किंचन सच्चरित्रे ॥ ५९ ॥

अयमनुदिनदानोत्सर्पितप्राणपर्व-
स्फुरितचरितचारित्रः स्वामिमानस्तु मन्त्री ।
गुणिनरगणमानैर्यस्य कीर्तिप्रतानैः
रजनिरिव रजन्यः प्रासरासविपाराः ॥ ६० ॥

स्फुरन्ते गौरवः धाराः शासनस्ये नियोगिनः ।
अधिकारमधिकारमयाश्च शास्त्रगा पुनः ॥ ६१ ॥

त एव रमन्ते नृपनिकटाभिभावितया
प्रजानामानायं गतरि मतु चैव्य. प्रसरति ।
तदिप मुग्धानां नरिचारित्र काचि चगना

प्रवर्तमानेऽत्र कवित्वसत्रे सत्कृत्य सत्पात्रममात्यमेवम् ।
कृतार्थमात्मानमसावमस्त सौवस्तिको **गुर्जर**निर्जराणाम् ॥ ६६ ॥
**कुमारपुत्रेण** कुमारमातुः काव्यं तदेतज्जगदेकदेव्याः ।
श्रुतिस्मृतिव्याकृतियज्ञविद्याविशारदेन क्रियते स्म तेन ॥ ६७ ॥

इति श्रीगुर्जरेश्वरपुरोहित**श्रीसोमेश्वरदेव**विरचिते **सुरथोत्सव**नाम्नि महाकाव्ये कविप्रशस्तिवर्णनो नाम पञ्चदशः सर्गः ॥"

इत्येतद्ग्रन्थीयकविप्रशस्तिवर्णनात्मकपञ्चदशसर्गदर्शनतो **गुर्जरेश्वरपुरोहित**पदभूषितः **श्रीसोमेश्वरदेवकविः** श्रीमद्द्वितीय**भीमदेव**सभायां सभासद्रूपेण मण्डयामासेति प्रतीयते. श्रीमद्द्वितीय**भीमदेव**राज्यं च—A. D. 1179–1242 इति.

किं च—**सुरथोत्सव**महाकाव्यादन्यत् **कीर्तिकौमुदी**काव्यस्य नरेन्द्रवर्णनात्मकद्वितीयसर्गे तु **मूलराजादि-भीमदेवान्त चौलुक्य**वंशं वर्णयित्वापरशाखान्तरोद्भूत**मर्णोराजादि-वीरधवलान्त** राजवंशवर्णनमधिकं स्वयमेव **सोमेश्वरदेवो** वर्णयामास. तथाहि—

"अथ तत्रैव **चौलुक्य**वंशे शाखान्तरोद्भवः ।
**अर्णोराजः** स राजर्षिस्तन्नामर्पत विप्लवम् ॥ ६२ ॥
तत्पुत्रः प्रसरत्कीर्तिपताकाचुम्बिताम्बरः ।
**श्रीलावण्यप्रसादोऽ**स्ति प्रासादः शौर्यसंपदः ॥ ६७ ॥
**श्रीवीरधवल**स्तस्य सूनुर्वीरशिरोमणिः ।
युद्धे जयश्रिया धन्वज्यारावैराजुहाव यः ॥ ७६ ॥" इति.

अपि च—"**श्रीहर्ष**वंशे **हरिहरो** गौडदेशीयः सिद्धसारस्वतः, स **गुर्जरधरां** प्रत्यचालीत् । अश्वशतद्वयम्, मानवानां शतपञ्चकम्, करभाः पञ्चाशत्, अनिवारप्रसादान धवलक्ककतटमाममागात् । राण**श्रीवीरधवल-श्रीवस्तुपाल-श्रीसोमेश्वरदेवेभ्यः** पृथक्पृथगाशीर्वादं प्रगे भवद्भुहस्तेन प्राहैषीत् । श्रीवस्तुपालो जहर्ष । उत्थाय यद्गृह नीत्वा **श्रीवीरधवलाय** पण्डितस्याशीर्वादमदीदृशत्, तद्गुणांश्चावर्णत । **राणके**नोक्तम्—'विमन्त्र सुष्टम् ।' मन्त्र्याह—'देव, विस्तरेण प्रातः पण्डितस्य प्रवेशोत्सवः क्रियते, मिषुतं देव दीयते ।' **राणके**नोक्तम्—'न्याय्यम् ।' ततो निवृत्तो मन्त्रिराजेन वस्तुना तृतीय आशीर्वादः पण्डित**सोमेश्वरदेवा**यादर्शि । तत्र विनया राज्ञ मात्सर्यमदीशिष्ट । स विश्राममाप[या]चक्रन् । पद्ममालार्चित्—'अपि न ।' मन्त्री उत्थाय पद्मदरिद्रगन्तिषम्, उक्त राण[काय]—'मन्त्रिणः सौमनस्यम्, **सोमेश्वरदेवस्य** दौर्मनस्यम् ।' पुनर्विशो **सोमेश्वरदेव हरिहरौ** । तत्र प्रातः । राणकः सर्वात्मना राणानुवर्तनं सर्वथा संमुखो गतः । मिलितौ **हरिहरनाम वीरधवलं** सौ—

---

१. कुमारनामकविदुषः पुत्रेण **सोमेश्वरदेवेन.** २. उमाः रत्नरमाल

'शम्भुर्मानससंनिधौ सुरधुनी मूर्ध्ना दधानः स्थितः
श्रीकान्तश्चरणस्थितामपि वहन्नेता निलीनोऽम्बुधौ।
मग्नः पङ्करुहे कमण्डलुगतामेनां दधन्नाभिभू-
र्मन्ये वीर तव प्रतापदहनं ज्ञात्वोल्बणं भाविनम् ॥
दृष्टस्तेन शरान्किरन्नभिमुखः क्षत्रक्षये भार्गवो
दृष्टस्तेन निशाचरेश्वरवधव्यग्रो रघुग्रामणीः।
दृष्टस्तेन जयद्रथप्रमथनाभिद्रः(?)सुभद्रापति-
र्दृष्टो येन रणाङ्गणे सरभसश्चौलुक्यचूडामणिः ॥'

यदुः पृष्टः पण्डितेन—'अत्र सदसि **सोमेश्वरो**ऽस्ति न वा।' यदुराह—'स क्रोधान्नागतः।' पण्डितो ज्ञात्वास्माभ जात. प्रवेशः। **राणकेण** दत्तं सौधधनपुष्पवसनपरिजनतुरगादिचमत्कारकम्। अथ मन्त्रिगृहं गतोऽसौ। गुर्वी सभा। मन्त्र्यभ्युत्थानं चक्रे। ऊचे च—

'सुधा मधु सुधा शीधु सुधा सोऽपि सुधारसः।
आस्वादितं मनोहारि यदि हारिहरं वचः ॥'

पण्डित ऊचे—'देव, **लघुभोजराज**विचारचतुर्मुखसरस्वतीकण्ठाभरण, अवधारय। वयं पण्डिताः। अस्माकं माता भारती। सा च त्रिभुवनचारिणी। एकदा भारत्या सह महेन्द्रस्य सभामगमाम। तत्र च सुधर्मानाम इन्द्रः श्रीमान्

.................................... ।
.................................... ॥

कोट्यः सुराङ्गनाः सहस्राणि सामाजिकास्तथा।
द्वादशार्का वसवोऽष्टौ विश्वेदेवास्त्रयोदश ॥
षट्त्रिंशत्तु···तार्धव षष्टिराभा(?) स्थिरा अपि।
षट्त्रिंशदधिका माहाराजिकाश्च शते उभे ॥
रुद्रा एकादशैवैनपञ्चाशद्वायवोऽपि च।
चतुर्दश तु वैकुण्ठाः सुशर्माणः पुनर्दश।
साध्याश्च द्वादशैतावाद्याः प्रसिद्धा गणदेवताः ॥

एवं तत्रालापं श्रुत्वा विस्मितोऽहं भार्यया सह पञ्चमं कल्पद्रुमं त्वां द्रष्टुमागाम् ।' एवं सविस्तरं काव्यं व्याख्याय स्थितः पण्डितः । मन्त्री यावत् 'किं ददामि' इति चिन्तयति, तावज्झोळीयवस्यराणक**भीमदेवेन** जात्या वाहनोत्तीर्णाश्चतुर्विंशतिरश्वाः, एकं च दिव्यं पदकं प्राभृतमानीतम् । तदेव पण्डिताय सर्वं दत्तम् । तुष्टोऽसौ 'पञ्चमः कल्पतरुर्भवसि' इत्युक्त्वा स्वोत्तारकमगात् । गतिस्थितिमतिज्ञः पण्डितो विलसति । गतेषु कतिपयेष्वहःसु मिलितायां महासभायां पुरःस्थे **सोमेश्वरे राणकेन** पण्डित**हरिहर** उक्तः—'पण्डित, अत्र पुरेऽस्माभि**र्वीरनारायणा**ख्यः प्रासादः कारितोऽस्ति । तत्प्रशस्तिकाव्यान्यष्टोत्तरशतं **सोमेश्वरदेव**पार्श्वात्कारितम् । तत्र भवन्त इव दधतु । यथा शुद्धत्वे निश्चयो भवति । ज्ञानं महाल······दृष्टौ नाणकपरीक्षा यतः ।' **हरिहरे**णोक्तम्—'कथाप्यन्तां तानि ।' उक्तानि **सोमेश्वरेण** तानि । श्रुत्वा तानि **हरिहर** ऊचे—'देव, सुष्ठु काव्यानि । परिचितानि च नः । यतो **मालवेपूज्जयिनीं** गतैरस्माभिः **सरस्वतीकण्ठाभरण**प्रासादगर्भगृहे पट्टिकायां श्री**भोजदेव**वर्णनाकाव्यान्यमून्युदध्रियन्त । यदि तु प्रत्ययो नास्ति, तदा परिपाट्या श्रूयन्ताम्' इत्युक्त्वा क्रमेणास्खलितान्यपाठीत् । खिन्नो **राणकः** । प्रीताः खलाः । व्यथिताः श्रीवस्तुपालादयः सज्जनाः । उद्विग्ना सभा । हत इव, मृत इव, स्तम्भित इव, जडित इव जातः **सोमेश्वरः** । गतः स्वगृहम् । ह्रिया वदनं न दर्शयति गृहेऽपि, का कथा राजादिसदनगमनस्य ।

अथ श्री**सोमेश्वरः** श्री**वस्तुपालमन्दिरे** गत्वोवाच—'मन्त्रिन्, ममैवैतानि काव्यानि, नान्यथा । मम च शक्तिं जानासि । **हरिहरस्त्वेव मां** व्यजुगुपत् । किमहं करोमि ।' मन्त्र्याह—'तमेव शरणं श्रय । यतः—'भजते विदेशमधिकेन जितस्तदनुप्रवेशमथ वा कुशलः' इति न्यायात् ।' पण्डितः—'तर्हि तत्र मां नय ।' तथा कृते मन्त्रिणा । **सोमेश्वरं** बहिरासयित्वा मन्त्री स्वयं **हरिहरा**न्तिकमगात् । बभाण च—'पण्डित**सोमेश्वरदेव**स्त्वदन्तिकमागतोऽस्ति विज्ञीप्सुः ।' सद्यो**ऽसौ हरिहर** आनाययत्स्वसमीपम्, चकाराभ्युत्थानालिङ्गनमहासनादिसत्कारम् । **सोमेश्वरे**णोक्तम्—'पण्डित, निस्तारय मामस्मात्परकाव्यहरणकलङ्कपङ्कात् । यतः—

> आगतस्य निजगेहमप्यरेर्गौरवं विदधते महाधियः ।
> शीतमारमसदनं समीयुषो गीर्पतिर्व्यधित तुङ्गतां भृगोः ॥'

तुष्टो **हरिहरः** । भणति स्म—'मा स्म चिन्तां विधाः ।' पुनर्गौरवमारोपयिष्यामि । ततो गतः स्वस्थानं मन्त्री **सोमेश्वरश्च** । प्रत्यूषे राणकसभान्तरे **सोमेश्वरं** आह्वयितः । प्रस्तावनाचार'' यथा—'जयति परमेश्वरी भारती, यत्प्रसादादेवं मम शक्तिः ।' श्री**वस्तुपाले**नोक्तम्—'किं किम् ।' **हरिहरः**—'देव, मया कावेरीनदीतटे सारस्वतो मन्त्रः साधितः । होमकाले गंदेवी प्रत्यक्षासीत् । 'वरं वृणीष्व' इत्याह स्म । मया जगदे—देवि मातर्, यदि तुष्टासि तदा एकदा भणितानां १०८ श्लोकानामूर्ध्वं पदपदानां धारणं 'स्तुतानां पठितानां दण्डकानां चावधारणे समर्थोऽभूवम् ।' देव्याह—'तथास्तु ।' गाथं ......

ततः प्रभृति यो यदाह १०८ तत्तद्वे । यथेद **सोमेश्वरदेवोपज्ञ** काव्याष्टोत्तरशतम् ।' **राणकेनोक्तम्**—'प्रसयः कार्यताम् ।' **हरिहरः**—'कार्यताम् ।' भाणितानि अष्टोत्तरशतानि तत्तच्छन्दसाम् । प्रतिभणितानि च **हरिहरेण** तानि । जातो निश्चयः । पण्डितहरिहरवचने क्षुत्तृष्णातपःप्रभृतिचिन्तानपेक्षः स्थितो लोकः । **राणकेश्वरेण** बभाणे—'तर्हि पण्डित, कथमेवं दूषितः **सोमेश्वरः** ।' **हरिहरः** प्राभाषत—'देव **राणेन्द्र**, पण्डिते मय्यवज्ञा दध्रे । तत्फलमिद ददे । यतः—

प्रिय वा विप्रिय वापि सविशेष परार्पितान् ।
प्रत्यर्पयन्ति येनैव तेभ्यः साध्युर्वरा····॥'

**राणकः** प्राह—'तथ्यमेवैवम् । परं मिथः सरस्वतीपुत्रयोः स्नेहो युक्तः ।' इत्युक्त्वा कण्ठग्रहणमकारयत् । स्थितो निष्कलङ्कः **सोमेश्वरो** वर्तते । नित्यमिष्टगोष्ठी **हरिहरो नैषध**काव्यान्यवसरोचितानि पठति । श्री**वस्तुपालः** प्रीयते—'अहो, श्रुतपूर्वाणि कुत्रस्यान्यमूनि काव्यानि ।' एकदालपितो **हरिहरः**—'पण्डित, कोऽय ग्रन्थः ।' पण्डितो वदति—'**नैषधं** महाकाव्यम् ।' 'कः कविः ।' '**श्रीहर्षः** ।' **वस्तुपालेन** गदितम्—'तदादर्शो दर्शयत ।' तर्हि पण्डितो ब्रूते—'नान्यत्राय ग्रन्थः । चतुरो यामानर्पयिष्यामि पुस्तिकाम् ।' अर्पिता पुस्तिका । रात्रौ सद्योलेखननियोगिभिर्लेखिता नवीना पुस्तिका जीर्णरज्ज्वाकृत्वा वासन्यासेन धूमरीकृत्य मुक्ता । प्रातः पण्डिताय पुस्तिका दत्ता—'गृह्यतां तदिद **स्वनैषधम्** ।' गृहीता पण्डितेन पुस्तिका । मन्त्रिणा न्यगादि—'अस्माकं कोशेऽपि किलास्ति **वेद**शास्त्रम्, इति स्मरामः । विलोक्यतां कोशः । यावद्विलम्बेनैव कष्टानदीनप्रति (?) यावच्छोध्यते, तावत् 'निपीय यस्य क्षितिरक्षिणः कथा–' इत्यादि**नैषधमुद्**घटितं । दृष्ट्वा पण्डित**हरिहरे**णोचे—'मन्त्रिन्, नवैव मायेयम् ।

यदीदृशेषु कार्येषु नान्यस्य क्रमते मतिः ।

युक्त त्वया दण्डिताः प्रतिपक्षाः । स्थापितानि जैन-वैष्णव-शैवशासनानि । उदक्षितः स्वामिवशः, यस्यैव प्रज्ञा प्रकाशते ।'

अत्रान्तरे **वीरधवल**प्रहितसैन्यचम्पितेन महाराष्ट्रप्रभुणा सपादकोटिप्रमितो दण्डः प्रहितः । श्री**वस्तुपालेन** तद्द्रेम चतुर्दिग्यात्रिकेभ्योऽदापि विवेशात् । तद्दृष्ट्वा **हरिहरो** वर्णयति—

'आः गाम्य न सहेऽहमस्य किमपि कोडीकृतैकश्रिया
यत्रोत्तानकरेण सर्वविनिजाकारोष्मणा शार्ङ्गिणा ।
येनैनाः पुरुषोत्तमाधिकगुणोद्गारेण मुद्रार्णवा-
दाकृष्यैव तथा श्रियः सकलशः कृतार्थिनामर्पिताः ॥'

तदा **वीरधवल**स्य 'सपादकोटिकाञ्चनवर्षः' इति मन्त्रादिषु विरुद स्यातिमायातम् ।
अथ **हरिहरः सोमेश्वरं** ननु गतो **देवपत्तनम्** । तत्र पण्डित**सोमेश्वरदेव**स्य तद्दौर्जन्य स्मृत्वा विषण्णचित्तं भणितम्—

'क्व यातु, क्वायातु, क्व वदतु, सम केन पठतु,
क्व काव्यान्यव्याज रचयतु, सद. कस्य विशतु, ।
स्खलद्व्यालग्रस्ते जगति न गति क्वापि कृतिना-
मिति शात्वा तत्त्व हरिहरविमूढो हरिहरः ॥

आरक्षाम नृपप्रसादकणिकामुद्राक्ष्म लक्ष्मीलवा-
न्निर्विद्याद्मयमध्यप्री(गी)ष्महि गुणे क्वाधिरपराजेष्महि ।
इत्थ मोहमयीमकार्ष्म विपतीं नानर्थकन्था मन-
स्वाधीनीकृतशुद्धबोधमधुना वाञ्छत्यमर्त्यापगाम् ॥'

इत्युक्त्वा धनार्धं दत्त्वा शेषार्धं गृहीत्वा **धवलकक्कमध्ये** भूत्वा **राणकमन्त्रिणा** आपृच्छ्य काशीं प्राप्य स्वार्थमसाधयदिति **हरिहरः** ।"

इति जैन**राजशेखरसूरि**विरचित**प्रबन्धकोश**ान्तर्गत**हरिहरप्रबन्ध**कथादर्शनतः, **कीर्तिकौमुदी**कथादर्शनतश्च **वीरधवले** राजनि **वस्तुपाले**ऽमात्ये सति **गुर्जरेश्वरपुरोहित**पदमण्डितः श्री**सोमेश्वरदेवः** सभामण्डपमण्डन आसीदिति प्रतीयते । **वीरधवल**राज्य च—A. D. 1219–1239 (?) इति.

"**अणहिल्लपत्तनासन्न वायटं** नाम स्थानमास्ते चतुरशीतिमहास्थानानामन्यतमत्(म्) । तत्र परपुरप्रवेशविद्यासंपन्नश्री**जीवदेवसूरि**सन्ताने श्री**जिनदत्तसूरयो** जगर्जुः । तेषां शिष्योऽ**मरो** नाम प्रज्ञालचूडामणिः । स **जिनदत्तसूरि**भक्तात्कविराजा**दमरसिंह**ात्सिद्धसारस्वत मन्त्रमग्रहीत् । तद्गच्छमहाभक्तस्य विवेकनिधेः कोष्ठागारिकस्य **पद्मस्य** विशालतमे सदनैकदेशे विजने एकविंशत्या आम्ले(म्ल)र्निद्राजयास(श)नजयकषायजयादिदत्तावधानस्त मन्त्रमजपत् । विस्तरेण होम च चक्रे । एकविंशतितम्या रात्रौ मध्यप्राप्ताया नभस्युदिताचन्द्रबिम्बान्निर्गत्य स्वरूपेणागत्या**मरं** भारतीकरकमण्डलुजलमपीप्यत्, वरं च प्रादात्—'सिद्धकविर्भव । नि शेषनरपतिपूजागौरवितश्चैधि ।' इति वरं दत्त्वा गता भगवती । जात कविपतिर**मरः** । रचिता **काव्यकल्पलता** नाम कविशिक्षा, **छन्दोरत्नावली मुक्तावली** च, **कलाकलापाख्य** च शास्त्रं निबद्धम्, **बालभारतं** च । **बालभारते** च प्रभातवर्णने—

'दधिमथनविलोलल्लोलदृग्वेणिदम्भा-
दयमदयमनङ्गो विश्वविश्वैकजेता ।
भवपरिभवकोपत्यक्तबाण कृपाण-
श्रममिव दिवसादौ व्यक्तशक्तिर्व्यनक्ति ॥'

(आदिपर्व-स० ११ श्लो० ६)

इत्यत्र वेण्याः कृपाणत्वेन वर्णनात् '**वेणीकृपाणोऽमरः**' इति बिरुद कविवृन्दात्लब्धम्, **दीपिकाकालिदासवत्, घण्टामाघवच्च** । कविप्रसिद्धेश्च महाराष्ट्रादिनरेश

राणां पूजा उपतस्थिरे । तदा **वीसलदेवो** राजा **गुर्जराधिपतिर्धवलक्कके** राज्यं प्रशास्ति । तेनामरकवेर्गुणग्रामः श्रुतः । ठकुर **वइजलं**(?) प्रधान प्रेष्य प्रातराहूतः कवीन्द्रः । आसनादिप्रतिपत्तिः कृता । सभा महती । **अमरेण** पठितम्—

'वीक्ष्यैतद्भुजविक्रमक्रमचमत्कारं निकारं मयि
प्रेम्णो नूनमियं करिष्यति गुणग्रामैकगृह्याशया ।
श्रीमद्वीसलदेव देवरमणीवृन्दे त्वदायोधन-
प्रेक्षाप्रक्षुभिते विमुञ्चति परीरम्भाय रम्या हरिः ॥

त्वत्प्रारब्धप्रचण्डप्रधननिधनितारातिवीरातिरेक-
क्रीडत्कीलालकुल्यावलिभिरलभत स्पदसा(?)कन्दमुर्वी ।
दम्भोलिस्तम्भभास्वद्भुजभुजग ·· · द्धर्तुरामर्तुरेनां
तेनायः(?)मूर्ध्नि रजयुतितितिमिपतः शोभते शोणभावः ॥'

रञ्जिता सभा । प्रीणितः पृथ्वीपालः । ततो राज्ञा प्रोक्तम्—'यूयं कवीन्द्राः श्रूयध्वे ।' **अमरो**ऽभिधत्ते—'सत्यमेव यदि गवेषयति देवः ।' ततो नृपेण **सोमेश्वर**देवे दृष्टिः सञ्चारिता । ततः **सोमेश्वरेण** समस्यार्पिता । यथा—

'शीर्षाणां सैव वन्ध्या मम नवतिरभूल्लोचनानामशीतिः ।'

**अमरेण** सद्यः समस्या पूरिता—

'कैषा भूषा शिरोक्ष्णां तव भुजगपते रेखयामास भूत्या
द्यूते मन्मूर्ध्नि शंभुः सदशनवशता(९१०)नक्षपातान्विजित्य ।
गौरी त्वामत्र दृष्टिर्जितनखनवभू(१९२०)स्तद्विशेषात्तदिश्थ
शीर्षाणां सैव वन्ध्या मम नवतिरभूल्लोचनानामशीतिः ॥'

(अत्र शिरोक्ष्णामिति शिरसा युक्तानामक्ष्णामिति मध्यमपदलोपी समासः कार्यः । द्वन्द्वे तु प्राण्यङ्गत्वादेकत्वं प्राप्नोति ।)

ततो वामनस्थलीयकवि**सोमादित्येन** समस्या दत्ता—

'धनुष्कोटौ भृङ्गस्तदुपरि गिरिस्तत्र जलधिः ।'

**अमरेणोक्तम्**—

'भवस्याभूद्भाले हिमकरकलाभे गिरिसुता-
ललाटस्याश्लेषे हरिणमदपुण्ड्रप्रतिकृतिः ।
कपर्दस्तत्प्रान्ते ग्रहसरस्तस्य तदहो
धनुष्कोटौ भृङ्गस्तदुपरि गिरिस्तत्र जलधिः ॥'

ततः **कृष्णनगरवास्तव्येन कमलादित्येन** समस्या वितीर्णा—

'मशकगलरन्ध्रे हस्तियूथं प्रविष्टम् ।'

---

१ अयं टिप्पणिरूप पाठो मूले केनचित्प्रक्षिप्तो भवेत्.

अमरेण पुपूरे—

'तटविपिनविहारोच्छृङ्खल यत्र यादो-
मशस्गलफरन्ध्रे हस्तियूथ प्रविष्टम् ।
यत यद न यदाचिर्कि श्रुतोऽप्येप वार्धिः
प्रतनुतिमिति तत्रे क्वापि गच्छ क्षणेन ॥'

अथ वीसलनगरीयेण नानाकेन समस्या विश्राणिता—

'गीत न गायतितरां युवतिर्निशासु ।'

अमरेण पूरिता—

'श्रुत्वा ध्वनेर्मधुरतां सहसावतीर्णे भूमौ मृगे विगतलाञ्छन एप चन्द्रः ।
मागान्मदीयवदनस्य तुलामितीव गीत न गायतितरां युवतिर्निशासु ॥'

एवमष्टोत्तरं शत बहुश्वविदत्ताः पूरिताः समस्याः श्रीअमरेण ।

ततो राज्ञाभिहितम्—'सत्य कविसार्वभौमः श्रीअमरः ।' तत्र दिने संध्यावधि सभा निषण्णा स्थिता । राजा लङ्कितः सभ्यलोकोऽपि ।

रसावेशे हि वालोऽर्हंर्गच्छनपि न लक्ष्यते ।

द्वितीयदिने सद्यः काव्यमयैः प्रमाणोपन्यासैः प्रमाणिका जिताः । तृतीयदिने राज्ञा पृष्टम्—'अस्माक सप्रति का चिन्तास्ति' इति कथ्यताम् । अमरेण भणितम्—'देव, कथ दूरं गता । स्वर्गे ऐरावणस्य दक्षिणकर्णे लुकिता ।' भूपति- स्वरगवा(?)दमोदत । शिरोऽधुनोत् । नित्य गमनागमने[न] जिनधर्मासनः कृतो राजा चैत्येपु पूजाः कारयति । एकदा नृपेण पृष्टम्—'भवतां कः कलागुरुः ।' अमरेण गदितम्—'अमरसिंहः कविरा', इति । राजाह—'तर्हि प्रातरानेय ।' अमरचन्द्रेणानीतः प्रातः कविराज उपर तदा राजा खड्गेन श्रमयनास्ते । राज्ञा पृष्टम्—'अय कविराजः ।' कविराजेन न्या 'ओम्' इति । राजाह—'तर्हि वद कालोचित किंचित् ।' अमरसिंहः कवयति—

'त्वत्कृपाणविनिर्माणशेपद्रव्येण वेधसा ।
कृतः कृतान्तसर्पस्तु करोद्वर्तनवर्तिभिः ॥

अच्छाच्छाभ्यधिकापण किमपि य. पाणौ. कृपाणे गुणः
सचकाम स यद्‌दौ द्रुपदवीं प्रत्यर्थिपु क्ष्माधिपु ।
तत्मद्दाग्न स वद्धमुष्टिरभवद्येनारिपृथ्वीभुजां
पृष्टेपु स्वमपि प्रकाममुदितप्रोद्दामरोमोद्गम' ॥

कलयसि किमिह कृपाण वीसल बलवन्ति शत्रुपु तृणानि ।
यानि मुखगानि तेषां न चैप लङ्घयितुमसमर्थ ॥

इत्थ
दधम, दी।

देव त्व मलयाचलोऽसि भवत श्रीखण्डशाखी भुज-
स्तत्र क्रीडति कज्जलाकृतिरसिद्दा(र्धा)राद्विजिह्व फणी ।

एष स्वाङ्गमनर्गलं रिपुतरस्कन्धेषु सर्वंङ्कष-
न्दीर्घं व्योमविशा(सा)रि निर्मलयशोनिर्मोक्मुन्मुञ्चति ॥'

अद्भुतकवितादर्शनात्कविराजो राजेन्द्रेण नित्यसेवकः कृतः । ग्रासो महान्प्रत्यग्रा-
पि । एकदा श्रीवीसलदेवेन भोजनान्ते तृणं करे कृत्वामरसिंहोऽभिदधे—'इदं
तृणं सद्यो वर्णय । यदि रचितमङ्क्षया वर्णयसि, तदा ग्रासद्वैगुण्यम् । अन्यथा सर्वग्रास-
त्याजनम् ।' इत्युक्तिसमकालमेवाहूतप्रतिभतया स ऊचे—

'क्षारोऽब्धिः शिशिरो मरुा विषमयः श्वभ्रं क्षयीन्दुर्मुधा
प्राहुस्तन्न सुधामिय तु दधतु जन्तस्ते,²,वल्लीलातृणे ।
पीयूषप्रसवो गवां यदशनाद्द(दु)ग्धं यदास्ये निजे
देव त्वत्करवालकालमुरतो निर्याति जातिर्द्विषाम् ॥'

ध्वनितो(?) भूपाल. । ग्रासद्वैगुण्यं कृतम् । कालान्तरे अमरेण कौमुदागादिपद्मान-
न्दाख्यं शास्त्रं रचितम् । एवं कवितांकेल्याग्राज्यं प्रतिदिनम् ॥ इत्यमरचन्द्रकवि-
प्रबन्धः ॥"

इति जैनराजदोरारसूरिनिर्मितप्रबन्धकोषान्तर्गतामरचन्द्रकविप्रबन्धलेख-
समालोचनतः श्रीसोमेश्वरदेवः श्रीवीसलदेवराजसभामण्डलं मण्डयामासेति
निर्धार्यते ।

वीसलदेवराज्यसमयस्तु—'स्वस्ति श्रीमद्विक्रमकालातीतसप्तदशाधिकत्रयोदशश-
तिक(१३१७)संवत्सरे लौकिकज्येष्ठमासस्य कृष्णपक्षचतुर्थ्यां तिथौ गुरावद्येह श्रीमदणहि-
लुपाटके समस्तराजावलीविराजितपरमेश्वरपरमभट्टारक-उमापतिवरलब्धप्रसादप्रौढप्रता-
पचौलुक्यकुलकमलिनीकलिकाविकासमार्तण्ड-सिङ्घणसैन्यसमुद्रशोषणवडवानल-मा-
लवाधीशमानमर्दन-मेदपाटकदेशकलुषराज्यवल्लीकन्दोच्छेदनकुद्दालकल्प-कर्णाटराज
प्रार्थितनयाश्रयवरपुरुषोत्तम-भुजबलभीम-अभिनवसिद्धराज-अपरार्जुन-इत्यादिसमस्त-
बिरुदावलीसमलंकृतमहाराजाधिराजश्रीमद्वीसलदेवकल्याणविजयिराज्ये तत्पादपद्मोपजीविनि
महामात्यश्रीनागडे श्रीश्रीकरणादिसमस्तमुद्राव्यापारान्परिपन्थयतीत्येवं काले प्रवर्तमानेऽस्यैव
प्रभोः श्रीमहाराजस्य प्रसादपत्तलायां वर्द्धिपथके भुज्यमानमण्डल्यां जयश्रीनिर्भ-
रालिङ्गितशरीरो महामण्डलेश्वरराणश्रीसामन्तसिंहदेवो नगरपौरानन्यानपि सर्वा-
नधिकृत सर्वेषां विदितं पत्रशासनं प्रयच्छति, यथा—सन्मया महादानोदकप्रक्षा-
लितवामेतरकरतलेन परमधार्मिकेण भूत्वा तादृशपुण्योदयं ज्ञात्वा शुभावगमं परि-
भाव्य चराचरत्रिभुवनगुरुं भगवन्तं भवानीपति समभ्यर्च्य संसारासारतां विचिन्त्य
नलिनीदलगतजलतरलतरं जीवितव्यमै(मे)श्वर्यं चावगम्य ऐहिकं पारत्रिकं च फलम-
ङ्गीकृत्य-' इति Dr. G. Bühler, Ph. D., L. L. D., C. I. E. महा-
शयैः Indian Antiquary—Vol. VI. P. 210-12 प्रदर्शितदानपत्रतः
श्रीमद्वीसलनरपतिराज्ये त्रयोदशाधिकशतके निर्धार्यते तत्समयः A. D. 1243-

44, 1261-62 (वि० स० १३००-१८) वीसलनरपते राज्यमिति Dr. G. Buhler, Ph. D., L. L. D., C. I. E. महाशयसिद्धान्तः. डॉक्टर-रामकृष्ण-गोपाल-भाण्डारकरीय१८८३-८४तमवर्षीय'रिपोर्ट'पुस्तके तु ३१८ पृष्ठे ४५७ पृष्ठे च, '१३०२ (विक्रम) वर्षे वीसलदेवस्थाप्य वर्षे १८ राज्य कृतम्' इति दृश्यते.

एव च श्रीमद्भीमदेवराज्यसमयम् A. D. 1179 आरभ्य श्रीमद्वीसलदेवराज्यसमय A. D. 1262 पर्यन्त साधारणतया श्रीसोमेश्वरदेवस्य सत्ताप्रतीतिः.

एतेन त्रयोदशखिस्तशतकनिश्चितस्थितिर्गुर्जरेश्वरपुरोहितपदमण्डितः श्रीसोमेश्वरदेवकविर्भीमदेववीसलराजधानीमलकुर्वाणस्त्रयोदशखिस्तशतके सुरथोत्सवं नाम महाकाव्य निर्मितवान् । अनेनैव कविवरेण सुरथोत्सव-कीर्तिकौमुदी ग्रन्थद्वयातिरिक्तम् काव्यप्रकाशटीका, काव्यादर्शः, रामशतकम्, इत्येतद्ग्रन्थत्रयमपि निर्मितमिति Catalogus Catalogorum पुस्तके Dr. Theodor Aufrecht महाशयवराः ।

तदेतस्य सुरथोत्सवनाम्नो महाकाव्यस्य पुस्तकद्वयमस्माभिः संगृहीतम् । तत्र च—
क-संज्ञक स्वर्यातमहामहोपाध्याय-पण्डितदुर्गाप्रसादसरस्वतीसदनस्थम् ।
ख संज्ञक पुण्यपत्तनग्रन्थसग्रहालयस्थम् ।

एव पुस्तकद्वयाधारेण शोधितमुद्रितेऽप्यस्मिन्ग्रन्थे यत्र कुत्रचनाशुद्धिरस्मद्दोषादक्षरयोजकदोषाद्वा स्थिता जाता वा भवेत्तत्सुहृदयहृदयाः संशोधयन्तु । यतः—

गच्छतः स्खलन क्वापि भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समादधति सज्जना. ॥

इति प्रार्थयतः—

पण्डित-शिवदत्त-काशीनाथौ ।

# काव्यमाला ।

श्रीसोमेश्वरदेवविरचितं

## सुरथोत्सवम् ।

प्रथम सर्ग ।

श्रीकण्ठकान्तासु सता सुखाय नखेन्दुकान्तिच्छुरितो यदङ्घ्रि ।
हसन्निवाभाति महेन्द्रहेतिमखण्डितोद्दण्डलुलायलोमाम् ॥ १ ॥
स च शिवायाश्चरण श्रियेऽस्तु रक्ताक्षरक्तोक्षितमाहवे यम् ।
प्रक्षालयन्ति स्म सम नमन्त प्रमोदवाष्पाम्बुभिरेव देवा ॥ २ ॥
दन्तान्तरालप्रणयीनि युद्धाजिरेऽर्धजग्धान्यपि जङ्गलानि ।
कनिष्ठिकाग्रेण किलाट्टयन्ती भद्राणि व पुष्यतु भद्रकाली ॥ ३ ॥
मीनध्वजप्रज्वलनापराधात्पुर पुराणा प्रणमत्यमित्रे ।
रतेर्मुख स्मेरमुपाजिगाय(१) विलोकयन्ती गिरिजा मुदेऽस्तु ॥ ४ ॥
सा च शिवायास्तु शिवा यदीयसारूतहक्पातगुरु गिरीश ।
नाद्यापि जीर्ण जरयत्युदीर्णमन्तर्विदुर्वाणमयुग्मबाणम् ॥ ५ ॥
सरस्वतीपाणिसरोजवीणा प्रीणातु सा व सरस रमन्ती ।
यत श्रुतेव श्रवणामृतोर्मिर्जिह्वासु वास स्फुरते कवीनाम् ॥ ६ ॥
जगत्त्रयेऽपि त्रिजगत्सवित्री दधातु धातुर्दुहिता हितानि ।
यत्पादपद्मद्वयसेवयेव कवित्वमापद्यत मीन(२)हस ॥ ७ ॥
दुग्धादभिव्यक्तवपु सुधाया स्वसा च मिथ्या मधुनाशनेन ।
कृताधिवासा कमलैरितीव या लोभनीया जगता स्तुमस्ताम् ॥ ८ ॥

१ जलपक्षित्वम् २ दुग्धसमुद्रादुत्पन्ना, दुग्धोज्ज्वलवपुश्च ३ विष्णुना, मधु-रभोजेन च

पुनर्भवक्लेशविनाशिनीनां पन्थाः श्रुतीनामुपतिष्ठते यम् ।
नतोऽस्मि हल्लोचनगोचराय कस्मैचिदस्मै परमेश्वराय ॥ ९ ॥

श्रुतिस्रवन्तीनगनायकाय पितामहाय प्रणतोऽस्मि तस्मै ।
वाग्देवतां विष्टपमातरं यः सृष्ट्वापि मातामहतामवाप ॥ १० ॥

क्षमावतामायतमाय तस्मै विश्वैकनाथाय नमस्करोमि ।
चक्रं च पादैरपि च स्पृशन्तं दोषाकरं यः शिरसा बिभर्ति ॥ ११ ॥

सारद्विपः पातु शिरःसरिद्भिः क्रशं वपुर्यस्तविधे दधानः ।
दुःखेन सख्युः कुसुमायुधस्य तपस्यतीवोर्ध्वकरः सुधांशुः ॥ १२ ॥

उमः स्वयं गेहवती च चण्डी पुत्रोऽग्निभूः संनिहिता द्विजिह्वाः ।
एवंप्रकारोऽपि परं य एकः कल्याणहेतुर्जगतां स पातु ॥ १३ ॥

वन्दे सदैकं शिवयोः शरीरं यद्वामभागे कुचकुम्भदम्भात् ।
अवाप्तमृत्युर्युधि लिङ्गरूपी वीरः स्वयंभूरुदभून्मनोभूः ॥ १४ ॥

धातायमेकः पततामिहेति मत्वेव पत्या पततां श्रितो यः ।
मुदे स देवोऽस्तु सदा मदान्धदैतेयदन्तीन्द्रहरिर्हरिर्वः ॥ १५ ॥

पादाग्रदग्ने विदधत्पयोधौ कालिं स [3]कोलः कुरुतान्मुदं वः ।
दंष्ट्राविलग्नामवनिं विवेद यस्तत्कृताभिः स्तुतिघोषणाभिः ॥ १६ ॥

पुंस्केसरी पातु स वः स्तवार्थमायःसु(?) यस्य त्रिदशेषु हर्षात् ।
गन्धोपलम्भेऽपि भयान्निवृत्तं शश्वन्मदेन द्विरदाननेन ॥ १७ ॥

स पातु गोवर्धनभारखिन्नयदङ्गसंवाहनकैतवेन ।
गोप्यो गुरूणां पुरतोऽप्यशङ्कमवापुराश्लेषसुखं स्मरार्ताः ॥ १८ ॥

राधास्तु सिद्ध्यै रतिविग्रहे या प्रत्तं प्रियेणाधरमित्यपास्थत् ।
प्रयच्छ तस्मै तव चक्रिणोऽपि प्रतिग्रहेऽस्मिन्रुचिरस्ति यस्याः ॥ १९ ॥

श्रियेऽस्तु रामस्तव यः पलाशसमित्समिद्धे निजशौर्यवह्नौ ।
दशास्यराज्यं सुरभीदमाज्यमिवासिजुह्वा जुहवांचकार ॥ २० ॥

---

१. ज्ञानगम्याय. २. इह संसारे पततामयं विष्णुरेको धाता धारक इत्यर्थः. ३. वराह'. ४. 'तैलिकप्रतिग्रहोऽतिनिन्दित'.

वन्दे विदेहाधिपतेस्तनूजां यस्याः परित्यागकथाप्रथासु।
सा रामभद्रस्य यशःप्रशास्तिर्विश्वप्रियाप्यप्रियतां प्रयाति ॥ २१ ॥
भग्नोग्रधन्वा जनकोपकारी रामोऽस्तु भर्ता न तु रावणो मे।
या नित्यमित्यर्थयते स गौरीं गुरुः कथं स्त्रीषु न मैथिली सा ॥२२॥
लम्बोदरस्येन्दुसहोदरश्रीर्दन्तोऽस्तु संतोषसमृद्धये वः।
मदस्रवन्तीसविधस्थितो यः सितच्छदस्य च्छविमाच्छिनत्ति ॥ २३ ॥
विलोलयन्मौलिमनेकवेलमनेकपास्यः समुपास्यतां सः।
यः प्रत्यहं स्वप्रणतिप्रियेभ्यः प्रदातुमाकारयतीव सिद्धिम् ॥ २४ ॥
तन्मण्डलं चण्डरुचेः शुचं वश्छिनत्तु दैत्यारिपुरप्रतोली।
यत्राङ्कुरश्रेणिनिभा विभाति भासां ततिस्तोरणमालिकेव ॥ २५ ॥
भावेन वन्देऽहमशीतरश्मिं दत्ते नवं देहमदेहिनां यः।
कृत्वा तमोहानिमुपस्करोति यः शान्तमोहानि च दिङ्मुखानि ॥ २६ ॥
धीरः स्मरो भीरुपरिच्छदोऽपि वन्द्यः स यस्मादपि भस्मिताङ्गात्।
शङ्के शशाङ्काभरणः सशङ्को दुर्गाश्रयं मुञ्चति नाधुनापि ॥ २७ ॥
ताभ्यस्त्रिसृभ्योऽपि नमः श्रुतिभ्यः श्रेयःसुता(?)न्यजनितान्दधाना।
महामुनीनां किल मण्डलीयमालम्बते बालकपालकत्वम् ॥ २८ ॥
जयन्ति विश्वत्रयहेतवस्ते येषां बहूनां मुखमेकमेव।
जयत्यसावप्यवितर्क्यमूर्तिरेकस्य भूयांसि मुखानि यस्य ॥ २९ ॥
मुख्यं मुनीनामिव तं कवीनां नमामि येनागमकोविदेन।
स्वकाव्यदेवायतनेऽधिदेवी प्रतिष्ठिता राघवकीर्तिमूर्तिः ॥ ३० ॥
ऋचां रहस्यं, यजुषां विवर्तः, सारं च साम्नां, धुरि बन्धुराणाम्।
कृतिर्यदीया पृणति त्रिलोकीं तं सत्यवत्यास्तनयं स्तवीमि ॥ ३१ ॥
उपद्रुतद्रोणमपास्तसिन्धुराजं विराजत्पवनात्मजेन।
सरामवृत्तं हरिवंशहारि रामायणं भारतवन्नतोऽस्मि ॥ ३२ ॥
यः प्राकृतोत्त्यैव महाकवीनामगौरवं देवगिरां चकार।
बृहत्कथामस्य न मन्यते कः कवेर्गुणाढ्यस्य बृहत्कथेति ॥ ३३ ॥

१. हंसस्य. २. गजाननः.

सत्येन साहित्यरसेन सिक्ता सत्य सुबन्धुप्रमुखा कवीन्द्रा ।
तथा ह्यहृदयेष्वपि येषु साक्षादाकर्ण्यते कर्णसुखा तदुक्ति ॥ ३४ ॥
श्रीकालिदासस्य वचो विचार्य नैवान्यकाव्ये रमते मतिर्मे ।
किं पारिजात परिहृत्य हन्त भृङ्गालिरानन्दति सिन्धुवारे ॥ ३५ ॥
शङ्के चिरान्माघमुरारिमुख्या स्थास्यन्ति सुस्था सविधे विधातु ।
प्रवर्तिता यैर्निजवाग्विभूतिव्याजेन लोके मधुदुग्धकुल्या ॥ ३६ ॥
सरस्वतीं शश्वदुपासते ये गृह्णन्ति नार्थानपि ये परेषाम् ।
वृत्ताश्च(?) वृत्तैर्यतिसेवितैर्ये किं मेध्यमेभ्योऽप्यपर कविभ्य ॥ ३७ ॥
रसप्रधानै कवितावितानैर्मान्या न मान्या कवयो वयोभि ।
तेजोविशेषान्मणयोऽर्हणीया भवन्ति न प्रस्तरवत्प्रथिम्ना ॥ ३८ ॥
परस्य काव्य स्वमिति ब्रुवाणो विज्ञायते यैरिह काव्यचौर ।
विलोक्य माणिक्यमयोग्यहस्ते प्रत्येति को नाम यदेतदस्य ॥ ३९ ॥
काव्य परोक्षे म्रियते यदर्थे वृत्तेन कस्तेन गुणोऽस्ति कर्तु ।
यज्जीवतस्तस्य बहुश्रुतेभ्य शङ्काविपन्नस्य न चात्र कीर्ति ॥ ४० ॥
प्रणम्यतामस्खलितप्रवाहा सरस्वती सा कविपुङ्गवानाम् ।
अलब्धसध्या(?) न खलु प्रवेष्टु दुष्टैर्वकोटैरिव शक्यते या ॥ ४१ ॥
रसाश्रया वक्रतया च रम्या व्याकुर्वती काञ्चनकान्तिमुच्चै ।
सूक्ति कवे कस्यचिदेव वक्त्रे विभाति दष्ट्रेव किरीश्वरस्य ॥ ४२ ॥
किं सोऽपि काव्यस्वरस प्रशस्यो य पीयमान श्रवणाञ्जलिभ्याम् ।
श्रोतु प्रमोदाश्रुशिर प्रकम्पैर्न दर्शयत्याशु वपुर्विकारम् ॥ ४३ ॥
जयन्ति ते सज्जनवारिवाहा सर्वप्रमोदाय कृतोद्यमैर्य ।
यवासकानामिव दुर्जनाना देहेषु दाह परमुज्जिहीते ॥ ४४ ॥
खिन्नात्मना नि श्वसितानिलेन दु खानलेऽन्तर्ज्वलितु प्रवृत्ते ।
श्यामायमानानि मुखानि येषा धूमभ्रम बिभ्रति ते नमस्या. ॥ ४५ ॥
अङ्गालिशालीनि समन्ततोऽपि च्छायामनूनामन्ति मनोभिरामाम् ।
महात्मनामाननकाननानि न कस्य सतापभर हरन्ति ॥ ४६ ॥

१ भगवतो वराहस्य २ दृष्ट'

ते केऽप्यभूवन्कृतिनः कृतार्थी कृत्वा भुवं येस्त्रिदिवं व्रजद्भिः ।
जाने जनानिष्टनिवारणाय स्वनामसंकीर्तनमत्र मुक्तम् ॥ ४७ ॥
इयं प्रवृत्तिर्महतां कुतस्त्या यदब्रुवन्तोऽप्युपकुर्वतेऽमी ।
विना प्रसूनानि फलप्रसूतिर्विलोकिता तैर्नु वनस्पतीनाम् ॥ ४८ ॥
चिरं परोक्ष(?)स्वनिजस्वभावाच्चलन्ति नैवोत्तमवंशजाताः ।
इतस्ततो वापि विधूयमानमङ्गेषु शैत्यं व्यजनं व्यनक्ति ॥ ४९ ॥
उपक्ष्यते यः खलमाक्षिपन्तं साधुर्मनोऽबुध्यत कारणं तत् ।
द्विजिह्वमेनं स यदेकजिह्वः प्रयुक्तिभिर्न क्रमते नियन्तुम् ॥ ५० ॥
क्षमामहंकारभरेण येषां पदानि चित्तानि च न स्पृशन्ति ।
तैरेकसारैः कलहं कुलीनैः खलाश्चिकीर्षन्ति किमक्षमास्ते ॥ ५१ ॥
बभूव भूयस्त्वमसज्जनानां द्वित्रा धरित्र्यामपि हन्त सन्तः ।
पदे पदे सन्त्यथवा भुजङ्गाः क्वचित्तु संजीवनभेषजानि ॥ ५२ ॥
अहो महामोहवतः खलस्य वियातता काचिदचिन्तनीया ।
अवर्णवादैकविशारदोऽसौ सर्वज्ञतामात्मनि मन्यते यत् ॥ ५३ ॥
खलश्च खङ्गश्च नहि स्वभावं जहाति कोशार्पणलालितोऽपि ।
यस्यातिमात्रं मलिनात्मकस्य परं द्विधा कुर्वत एव रागः ॥ ५४ ॥
परक्षतक्षोदविनोदलीलाः खलाश्च काकाश्च यदृच्छयैव ।
पात्रेऽप्यपात्रेऽपि विगर्हणीयां वाचं च विष्टां च समुत्सृजन्ति ॥५५॥
हे चित्त चित्रैरिह विष्टपस्य दुश्चेष्टितैर्लिखितैः किमेतैः ।
यदन्यदोषेक्षणदक्षिणानां जिह्वैव वृत्तान्तपटः स्फुटोऽस्ति ॥ ५६ ॥
वरं वराकः प्रकटापकारी गूढापकार्यप्रतिकार्य एव ।
दूरेण मुञ्चन्त्यनलं ज्वलन्तं छन्नं जनो वेत्ति तु दग्धपादः ॥ ५७ ॥
शक्तोऽपि वक्तुं नाल्पकुलीनः परापवादान् खलु व्यनक्ति ।
न व्याहरत्तीक्ष्णतराननोऽपि कीरः करोत्यक्षिनिपाटनानि ॥ ५८ ॥
न कस्य भीत्यै नृपतिप्रसादताम्बूलरक्ता रसना खलानाम् ।
अनन्तजन्तुक्षननिःसृतासृक्पानारुणा सौनिककर्तरीव ॥ ५९ ॥

---

१. 'उपेक्षते' इति म्या. २. 'जेन' इति भंर. ३. क्षमैकसारैः.

स्वच्छस्वभावोऽपि भवत्यवश्यमन्याद्दगन्यायिजनाश्रयेण ।
विषानुषङ्गेण हि जीवनीयं जीवापहाराय समुज्जिहीते ॥ ६० ॥
यः सर्वदा संसदि निर्मिमीते मर्मापिधानं जनतापहन्ता ।
स शस्यतामन्तरदुष्टभावः कुलोद्भवश्चाप्यकुलोद्भवश्च ॥ ६१ ॥
प्रायो वयं वेदविचारपारवश्येन काव्येन तथाभियुक्ताः ।
दुर्गेऽत्र मार्गे तदपि प्रवृत्ता नोपेक्षितव्याः कविभिः स्खलन्तः ॥ ६२ ॥
को वा करिष्यत्यपरः प्रबन्धमतिप्रबुद्धोऽप्यपशब्दशून्यम् ।
सर्गक्रमे सोऽपि कविर्यदाद्यः खलच्छलेन स्खलितान्यवाप ॥ ६३ ॥
चक्रे मया काव्यपरिश्रमोऽयं बहुश्रुतानामनुरञ्जनाय ।
न सूत्रमात्रार्थकथावबोधविदग्धताधःकृतवेधसां तु ॥ ६४ ॥
बभूव भूपः सुरथाभिधानश्चैत्रान्वये चैत्रसखोपमेयः ।
स्वनामसाम्याक्षमयेव युद्धे येनारिसैन्यं सुरथं न सेहे ॥ ६५ ॥
यं निर्विशेषात्स्म निषेवते श्रीरेकादर्शं श्रीदयितावतारम् ।
कीर्णं रजोभिः समराजिरोत्थैस्तुरङ्गमेधावभृथैश्च शुद्धम् ॥ ६६ ॥
निरन्धकारां कुरुते धरित्रीं काले रविर्वर्षति वारिदोऽपि ।
प्रवृत्तिरेतस्य सदातुदारु(?)निरन्तरायाभुवनावनाय ॥ ६७ ॥
धर्मक्षतेरेव भयं स्वभाववक्रप्रियः कार्मुकदण्ड एव ।
विपक्षलक्ष्मीग्रह एव लौल्यमदेयमासीद्यश एव यस्य ॥ ६८ ॥
गच्छद्भिरिच्छाधिकमर्थदानैर्यस्याभिमानैकनिकेतनस्य ।
पश्चात्कृतः स्वीकृतिनिःस्वनानां दूरप्रयातोऽपि धनाभिलाषः ॥ ६९ ॥
यत्कर्मकूर्मोरगसूकरेन्द्राः कल्पद्रुचिन्तामणिकामगव्यः ।
संभूय कुर्वन्ति तदेक एव चक्रे महीचक्रशतक्रतुर्यः ॥ ७० ॥
यच्छन्नतुच्छं गजवाजिवृन्ददानं द्विजानामवहानवान्यः ।
भालस्थितां चन्दनपङ्कलेपच्छलेन दारिद्र्यलिपिं लुलोप ॥ ७१ ॥

---

१. एतत्पद्यतः कथाया वर्णनारम्भः. २. चित्रागर्भजो यो बुधपुत्रः सप्तद्वीपाधिपतिः सुरथपितामहो राजविशेषस्तस्य संततावित्यर्थः. ३. अनन्तुल्यः.

विधाय साधूनधनान्विधाता जातानुतापः स बभूव सम्यक् ।
तेनात्र कल्पद्रुमकल्पमेनमेनस्तदुच्छेत्तुमिव व्यधत्त ॥ ७२ ॥
जडाः प्रजाः किं नु किमस्य कोऽपि प्रभोः प्रभावः सदृशं यदेताः ।
गुणानुपङ्गेण सितं यशश्च भुजद्वयं चासितमीडते स्म ॥ ७३ ॥
क्षीराम्बुराशेरिव भूरिसत्त्वादभूदितः कोऽपि यशःशशाङ्कः ।
यस्योदये स्वैरगतिर्विमुक्ता विरोधिनां कीर्तिभिरित्वरीभिः ॥ ७४ ॥
येषां यशोराशिरिह प्रशंसारसायनैर्जीर्यति नाधुनापि ।
तेषां गणे पार्थिवपुङ्गवानां यस्योपसंख्यानमकारि धीरैः ॥ ७५ ॥
येनार्जितं निर्जितवैरिणा तद्यशो यदन्तं व्रजदुर्वरायाः ।
आसीमपर्यन्तमिवानुगस्य(म्य) क्षीराम्बुराशि(शे)र्वलते तरङ्गैः ॥ ७६ ॥
अज्ञा रसज्ञा मम देवि तस्मात्त्वमेव वाणि स्तुहि पाणिमस्य ।
यः पञ्चशाखोऽपि सहस्रशाखं दानश्रिया कल्पतरुं जिगाय ॥ ७७ ॥
नृपे निषण्णोऽपि हृतारिकामोऽप्यन्यः पृथिव्यां परमेश्वरः सः ।
यदद्रिराजार्चितमङ्घ्रियुग्मं पुरानुरागश्च परश्चकासे ॥ ७८ ॥
आक्रम्य भूचक्रमशेषमेष तथा कथंचित्प्रभुतां प्रपेदे ।
मिथो यथैतेऽपि दिशामधीशा व्यवस्थिताः सीम्नि यदाज्ञयेव ॥ ७९॥
यद्वैरिणां काननशायिनां श्रीः संसर्पमाणा हृदयं ददाह ।
पार्श्वे लतासंस्तरसुप्तकान्तानिःश्वासवातप्रसरश्च पृष्ठम् ॥ ८० ॥
यतः क्रुधा भ्रूकुटिभुग्नभालात्पलायमानः प्रतिपक्षवर्गः ।
क्रमागतां भूपतितामपास्य खिन्नां प्रियां भूपतितां तु दध्रे ॥ ८१ ॥
अथैष सैन्यद्विपबृंहितेन निर्बृंहिताशागजगर्जितेन ।
दिवस्पृथिव्योः प्रथयन्निनादाद्वैतं विजेतुं द्विषतः प्रतस्थे ॥ ८२ ॥
प्रसर्पतां तस्य तुरङ्गमाणां रेणुः करेणुध्वनिरुद्धनो यः ।
स एव लेभे क्लिशितारिदंशः प्रतापधूमध्वजधूमलीलाम् ॥ ८३ ॥
दूतैस्तदभ्यागमनप्रवृत्तौ निष्पादिता यामथ पार्थिवानाम् ।
स्वेदाम्भसा साध्वसमंभवेन भागानि भालस्थलचन्दनानि ॥ ८४ ॥

प्रकुर्वतामाक्रमणं नृपाणां दर्पोल्बणानां फणिनामिवेषः।
शिरांसि राजन्मणिमण्डनानि निस्त्रिंशदण्डेन नतिं निनाय ॥ ८५ ॥
सरोवराणीव विगाह्य वैरिराजन्यसैन्यानि लसद्रसानि।
स पुण्डरीकाणि नृपप्रकाण्डमादत्त दन्तीव मदप्रदीप्तः ॥ ८६ ॥
प्रत्यर्थिदानोल्लसदङ्गराजपराजयद्योतितपाण्डुकीर्तिः।
कृष्णं पुरस्कृत्य कृपाणदण्डं यद्बाहुराजो विजयीबभूव ॥ ८७ ॥
तूणादुदस्ताद्धनुरन्वगच्छन्नितोऽपि याताः प्रतिपक्षवक्षः।
पेतुः पृथिव्यामथ यस्य बाणाश्चिरं प्रतिष्ठा क नु निर्गुणानाम् ॥ ८८ ॥
उद्गच्छताविष्कृतपुष्करेण यस्यासिदण्डेन विकर्तनेन।
सराजतेजःप्रसरा विरोधिसेना विनाशं रजनीव निन्ये ॥ ८९ ॥
चण्डस्वभावस्य चिकीर्षितं कः प्रभुर्निषेद्धुं यदसिस्तथा हि।
न दानतः सत्स्वपि वारणेषु कोशानपेक्षी समितौ व्यरंसीत् ॥ ९० ॥
त्यक्तौ(क्त्वा) पुरः केऽपि नृपाः कृपाणममुं प्रणेमुः प्रणतानुकूलम्।
अशक्तिभाजामियमेव मृत्युप्रतिक्रियाविष्कृतविक्रियेषु ॥ ९१ ॥
उपायनैर्वाजिमतङ्गजानां विजघ्नुरेके रणकेलिमस्य।
स्थि(छि)त्वाङ्गुलीपर्व च कुर्वते स्म शेषाङ्गरक्षामपरे नरेन्द्राः ॥ ९२ ॥
यत्र योद्धुमधिरूढवारणे वैरिणो रणभरात्पराङ्मुखाः।
क्षत्रवृत्तिमपहाय कानने क्षेत्रवृत्तिमभजन्त जीवितुम् ॥ ९३ ॥
राजकृत्यमिदमित्यसौ कृती युद्धमूर्धनि नृपानपाय(त)यत्।
संपदा पुनरनेकभुक्तया वेश्ययेव न वशी वशीकृतः ॥ ९४ ॥

वन्द्या कापि विदग्धतास्य नृपतेर्यस्मादथै(सौ) तद्भुज-
द्वन्द्वेनैव चकार यत्किल हरिश्चक्रे चतुर्भिर्भुजैः।
तद्वध्याः सुधियस्ततोऽपि यदमी युद्धोद्यतेऽत्र व्यधुः
सर्वस्वैरपि दुष्करं निजपरित्राणं तृणैर्वक्त्रगैः ॥ ९५ ॥

बद्धाः केचन केचन प्रणमिता दासीकृताः केचन
क्षिप्ताः केचन केचन प्रशमिताश्चारोपिताः केचन।

भूपालाः करवाललालनकलासोत्साहबाहुद्वयी-
दुःशीला अपि येन विश्वविजयव्यापारपारस्पृशा ॥ ९६ ॥

इति श्रीगुर्जरेश्वरपुरोहितश्रीसोमेश्वरदेवविरचिते सुरथोत्सवनाम्नि महाकाव्ये सुरथवर्णनो[१] नाम प्रथमः सर्गः ।

---

द्वितीयः सर्गः ।

असंख्यसंख्यश्रमखिन्नसैन्यः सोऽयं नयज्ञैर्विनिवारितोऽपि ।
विधिप्रणुन्नः प्रचचाल कोला[२]विध्वंसिनां ध्वंसधिया रिपूणाम् ॥ १ ॥
ते दुर्महास्त्रेन तरस्विनापि महीतशैलाग्रभुवो बभूवुः ।
द्रुमाधिरूढेषु मनुष्यकेषु सिंहः सरोषोऽपि हि किं करोतु ॥ २ ॥
अथास्य लक्ष्मीमुपभोक्तुकामैरमात्यकैः कैश्चिदवंशजातैः ।
दत्तोपजापा रिपवो रजन्यामन्यायजन्यं सह तेन तेनुः ॥ ३ ॥
महाहवे तत्र महाभटेषु कूटप्रयुक्तिप्रतिसंहृतेषु ।
जवाभ्यवर्तन्त निवर्तयन्तः शेषां स्वसेनां पिशुनाः प्रभोस्ते ॥ ४ ॥
परैरवाप्तावसरैः स वीरो न खल्वसैन्योऽप्यवमन्यते स्म ।
स्प्रष्टुं कराग्रेण कृपीटयोनिः स्फुलिङ्गशेषोऽपि हि शक्यते किम् ॥ ५ ॥
मुमोच यावन्न च दोःसखोऽपि भूमिं प्रतिज्ञामिव तां गृहीताम् ।
मातेव तावन्निजगोत्रदेवी स्वप्ने समागत्य तमित्युवाच ॥ ६ ॥
एकोऽसि तत्संहर संपरायं प्रवीर मा पूरय वैरिकामान् ।
विधौ क्रुधा निघ्नति निर्घृणे कः प्रति प्रहाराय समुज्जिहीते ॥ ७ ॥
तदर्थ(र्थं)मेव त्वमलक्षितः सन्निमानि निर्वासय दुर्दिनानि ।
कालेन केनापि पुनः प्रतापी भविष्यसीति ब्रुवती तिरोऽभूत् ॥ ८ ॥
नृपोऽपि नातिप्रमनाः प्रभाते तां मन्यमानः कुलदेवताज्ञाम् ।
यथायथं मातृगृहाणि गन्तुं कथंचिदन्तःपुरमादिदेश ॥ ९ ॥

---

१. एतत्सारभूतं पद्यं तु 'स्वारोचिषेऽन्तरे पूर्वं चैत्रवंशसमुद्भवः । सुरथो नाम राजाभूत्समस्ते क्षितिमण्डले ॥' इति. २. कोला या सुरथराजधानी तां ये विध्वंसितुकामास्तेषाम्.

अथात्मनस्तत्र तदीयमात्मबोधाय वित्तं परितापि भूयः ।
मिषेण शेषं च निषिध्य लोकमेको वनायाविदितः प्रतस्थे ॥ १० ॥
ततः श्रिया सद्मनि मुक्तयापि कान्तिच्छलेनैष निषेव्यमाणः ।
चित्ते सतामात्मगुणान्निधाय सद्मं ययौ सत्रसहस्रयाजी ॥ ११ ॥
द्रोहेण भर्तुः प्रतिगृह्य लक्ष्मीं लब्धोत्सवास्ते सचिवा बभूवुः ।
तं नावजग्मुर्निजवंशनाशं नहीदृशं पश्यति तादृशां दृक् ॥ १२ ॥
प्रवृत्तनृत्तासु लताङ्गनासु स्वनत्सु वातेन च कीचकेषु ।
तस्मिन्नुपेते नृपतौ वनं तदारब्धसंगीतमिवाबभासे ॥ १३ ॥
क तादृशं हन्त धराधिराज्यमरण्यवासः क च तादृशः सः ।
स्वप्नेऽपि यद्दुर्घटतामुपैति तदश्रमेणैव विधिर्विधत्ते ॥ १४ ॥
माद्यन्मयूरेषु वनान्तरेषु सलीलहंसेषु च सैकतेषु ।
मनोविनोदः क्वनापि नास्य यूथादपेतस्य यथा द्वि[प]स्य ॥ १५ ॥
सायं तमिस्रोपचितं वनान्तमालोकयन्नश्रुविमिश्रकण्ठः ।
आध्यातसौधः कृतनीडसङ्गाम(न)सौ विहङ्गान्बहु मन्यते स ॥ १६ ॥
शय्या निकुञ्जं वसनं तरुत्वक्चित्रं मृगौघः फलमूलमन्नम् ।
वनेऽभवन्निर्विषयस्य तस्य मुनीश्वरस्येव महीश्वरस्य ॥ १७ ॥
विशन्वनादेष वनान्तराणि सान्द्रद्रुमश्रेणिनिरन्तराणि ।
भाति स भिन्नाञ्जनसंनिभानि घनादिवेन्दुर्घनमण्डलानि ॥ १८ ॥
अथाश्रम श्रान्तमनाः स नाथः क्षितेः क्षतार्घैर्मुनिभिर्महार्घम् ।
ददर्श दर्शक्षणदासपक्षैः पवित्रितं होमहुताशधूमैः ॥ १९ ॥
गोसंगतिं नित्यमुपेत्य(त)वत्यः शुद्धाभिरिद्धा द्विजजातिभिश्च ।
यत्पर्णशालाः कमलासनस्य मुखाब्जसख्यं बिभरांबभूवुः ॥ २० ॥
निष्ठाप्रयोगेण गताः प्रतिष्ठां श्रद्धानुविद्धं विहिताग्निकार्याः ।
यत्रोज्जिहाना मुनयः परस्मैपदाय वैयाकरणा इवासन् ॥ २१ ॥
नीवारदानेन कुरङ्गकाणां सेकक्रियाभिर्वनवृक्षकाणाम् ।
यस्मिन्विवाहेन च माधवीनां हर्षं वहन्ति स्म महर्षिकन्याः ॥ २२ ॥

सुवर्णलक्ष्मीललिताङ्गयष्टिः सरिद्वराम्भःपरिपूतपादः।
श्यामद्युतिर्यत्र गणस्तरूणामुपेन्द्रमुद्रामुररीचकार ॥ २३ ॥
यत्र श्रुतीनां सततं श्रुतानि पदानि कीराः समुदीरयन्तः।
दत्तोपदेशा इव तापसेन्द्रैः फलाशिनो विष्णुपदे विचेरुः ॥ २४ ॥
सूतिः श्रुतीनां रिपुरिन्द्रियाणां शुद्धेः समृद्धिः सदनं दयायाः।
सरश्च संसारमरुस्थितानां तस्मिन्किलास्ति स्म मुनिः सुमेधाः ॥ २५ ॥
समित्कुशार्थं स कुशाग्रबुद्धिस्तपोवने तत्र कदाचिदश्चन्।
विलोकयामास विलोक्यमानं सास्रैर्मृगैस्तं विधुरं धरेन्द्रम् ॥ २६ ॥
अदर्शि पूर्वं प्रियदर्शनो यः स्तम्बेरमस्तोममनोरमश्रीः।
तमेकमालोक्य वने भ्रमन्तं ससंभ्रमान्तःकरणः स तस्थौ ॥ २७ ॥
तथा स्थितं वीक्ष्य तपस्विनाथं तेजोविशेषान्महनीयमूर्तिम्।
राजा निजान्तःकरणप्रणुन्नः स्वमेष नाम प्रणयन्ननाम ॥ २८ ॥
उदस्तहस्तं मुनिमाशिषे तं नत्वा नृपेन्दुर्मुदितान्तरात्मा।
आसेदुषीं स्वां श्रियमेष मेने सतां हि सङ्गः प्रतिभूर्विभूतेः ॥ २९ ॥
अथैनमानीय मुनिर्महीन्दुमुदीक्षणश्वापदमाश्रमं सः।
चकार सत्कारमुदारबुद्धिर्मान्या महान्तश्च्युतसंपदोऽपि ॥ ३० ॥
पाद्येन पाद्यं प्रतिपादितार्धमर्घ्येण चार्घ्यं तमृषिर्महित्वा।
विच्छायवक्त्राम्बुरुहं महेच्छः पप्रच्छ भूपं धृततुल्यखेदः ॥ ३१ ॥
नमन्नृपश्रेणिशिरोमणीनां प्रभाभिरारुण्यमुपागतौ यौ।
पादौ किमेतौ तव हन्त धत्तस्तदेव दर्भाङ्कुरकोटिरुग्णौ ॥ ३२ ॥
सेवागतैर्द्वारि निवारितैर्यद्दृष्टं न कष्टादपि भूमिपालैः।
रजोभिराखादितवर्मतोयैः किमेतदासीत्कलुषं मुखं ते ॥ ३३ ॥
भूभारमुग्रस्य भुजङ्गभर्तुर्विश्रामविश्राणनविश्रुतो यः।
विपद्भधूदघनसक्षताभैः स तेऽङ्कितोंऽसः किमु कण्टकाग्रैः ॥ ३४ ॥
दृष्टैर्विद्वषा समरे मरुद्भिः पपात यस्योपरि पुष्पवृष्टिः।
किमेष मौलिर्मुकुटोचितस्ते चितस्तृणैर्भूतलतल्पलग्नैः ॥ ३५ ॥

नीलाश्मलीलाह्य(स)भजत्सुवर्णे भुजे तव ज्याकिणकन्दली या।
अङ्गेषु साधारणकाकि(लि)केषु विलोक्यते सा न पृथक्किमेतत्॥ ३६॥
इत्थं मुनीन्द्रेण मनोज्ञवाचा कृतानुयोगो युगदीर्घबाहुः।
नृपस्त्रपाकुण्ठितकण्ठपीठः पूर्वानुभूतं निजगाद खेदम्॥ ३७॥
श्रुत्वा नृपेन्दोर्विपदां निदानं राज्योत्सवं चास्य पुनर्विधित्सुः।
समादधेऽसौ जनतोपतापसमापनैकव्यसना हि सन्तः॥ ३८॥
साम्राज्यमेतस्य पुनः प्रदातुं सैव प्रभुः पर्वतराजपुत्री।
ज्ञानादिति ज्ञाननिधिः स मत्वा वक्तुं ततः प्रक्रमते स्म तस्मै॥३९॥
श्रेयोवियोगान्न हि खेदनीयं सर्वसहा हन्त यतो महान्तः।
को नाम नास्यां विधिवागुरायां पपात मार्गेऽपि साधुमार्गम्॥ ४०॥
अयो(गो)चरस्तस्य विधेः प्रचारो यः सज्जनानामथ दुर्जनानाम्।
स्वर्णश्रिया संभृतमुत्तमाङ्गे स्वैरं विधत्ते मुकुटं कुटं वा॥ ४१॥
न विक्रमं नाभिजनं न विद्यां न हृद्यतां नापि वयो न वृत्तम्।
कृतप्रवृत्तिर्व्यसनाय पुंसामपेक्षते नैष विधिर्विपक्षः॥ ४२॥
छिद्राणि साधुर्विदधाति नैव परप्रवेश्यानि भवन्ति यानि।
केनाप्यसौ संव(च)रते कृतान्तच्छिद्रेण जानाति तदेव(प) एव॥४३॥
पुंसां यदासौ विरुणद्धि वेधास्तदा तुदत्येव यथा तथापि।
तत्राप्यहो ये यमपात्रमैत्रीशस्त्रार्पणं तस्य जिघांसतस्तत्॥ ४४॥
शुभैकलभ्यामशुभेन लक्ष्मीं ये केऽपि काङ्क्षन्ति परीगृ(ग्र)हीतुम्।
प्रकाशदृश्यां वनवर्तनीं ते ध्वान्तेन निर्धारयितुं यतन्ते॥ ४५॥
कामं कदाचित्कृतमेव वित्तं पुंसामसाधु स्वपुरस्क्रियाभिः।
क्षुद्राभिरुन्मुद्रितमाश्रयान्तर्भवेन्न तन्मध्विव भद्रमन्ते॥ ४६॥
अप्यल्पमादीनवमन्तरेण यः केवलं लोलतयैव मुक्तः।
शङ्के तदङ्कं पुनरप्युपैति जातानुतापेव समुत्सुका श्रीः॥ ४७॥
प्रायः प्रशस्ताचरितेषु धाता धृतप्रकोपोऽपि मृदुत्वगर्भः।
ग्रीष्मे यथा भीष्मरविप्रतापस्तथा घनच्छायपथद्रुमोऽपि॥ ४८॥

तद्भूपते भूतपतेः कलत्रं जगत्त्रयाम्बामविलम्बमानः।
आराधयाराधकवत्सलासौ विधास्यते मङ्गलमञ्जसा ते ॥ ४९ ॥
या वीजमेकं जगतां गतान्यकृत्यैः कृता चेतसि योगिभिर्या।
या देवतानामपि दैवतं च प्रभावमस्याः शृणु शर्वपत्न्याः ॥ ५० ॥
सन्त्येव सर्वत्र नृदेवदेवाः सेवानुरूपं फलमुत्सृजन्तः।
परं परीक्ष्या भजतामभीष्टमप्यल्पयानल्पमसौ प्रसौति ॥ ५१ ॥
श्रवः प्रतिष्ठेऽपि हि तच्चरित्रे यं दुश्चरित्रास्तव दत्तवन्तः।
दत्वा श्रियं सत्वधनोत्तमर्णात्त्वत्तो ग्रहीष्यन्ति पुनस्तमाधिम् ॥ ५२ ॥
तेनाथ नाथेन विशां विशेषात्कृताग्रहः प्राग्रहरो मुनीनाम्।
उवाच देवीचरितं रदांशुखण्डैर्निरस्यन्निव दुःखमस्य ॥ ५३ ॥
सुन्दोपसुन्दप्रतिमावभूतामवन्ध्यकोपौ किल विन्ध्यशैले।
दैत्येश्वरौ शुम्भनिशुम्भसंज्ञौ भुजावजेयाविव विक्रमस्य ॥ ५४ ॥
तप्त्वा तपः पूर्वमपूर्वमेतौ प्रसादयामासतुरब्जयोनिम्।
प्रीतेन तेनाप्यनयोर्वितीर्णमुदीर्णमाजौ मदवीजमोजः ॥ ५५ ॥
शुम्भः समासाद्य वरं विरञ्चेस्त्वष्टेव बिम्बं तुहिनेतरांशोः।
प्रजेश्वरैरप्रतिकार्यमूर्व्यामुपप्लवं पल्लवयांचकार ॥ ५६ ॥
अत्याहिते हन्त नितम्बिनीनां गर्भश्रुतिः स्यादिति सत्यमेतत्।
तथा हि रत्नानि मुमोच रत्नगर्भास्य विक्रामति वीरचक्रे ॥ ५७ ॥
विधूय सर्वामपि भूतधात्रीमुग्रद्रजोभूतिदुरीक्षणीयः।
उत्पातवातोपममुत्पपात दैत्यस्ततो बाधितुमूर्ध्वलोकम् ॥ ५८ ॥
उदीर्णमाकर्ण्य तमापतन्तमन्तःप्ररूढेन भयेन मूढः।
प्रियासु गोत्रस्खलनापराधविलक्षवक्त्रेन्दुरभूद्बुभुक्षाः ॥ ५९ ॥
आक्रम्यमाणा प्रसभोपभोगलोलेन खिन्नप्रतिमेन तेन।
अगादवाग्गोचरमाकुलत्वं कुलाङ्गनेवामरराजधानी ॥ ६० ॥
दूरेण दम्भोलिमलं विलङ्घ्य मघोनि जङ्घावलमभ्युपेते।
जहार हारीन्तत्रापविन्द्ररिन्दीवराक्षीरसुरः सुराणाम् ॥ ६१ ॥

समन्ततः संयमनीमनीकैर्मत्वा यदीयैर्विहितावरोधाम् ।
पत्या पितॄणां विपमस्थितेन वृथा विदध्रे समवर्तिसंज्ञा ॥ ६२ ॥
पाशैः पुरा यः कृतवैरिनाशैरपामधीशः किल पाशवीरः ।
दैत्यादितः सोऽपि समीकसीम्नि पलायमानोऽजनि धीरपाशः ॥ ६३ ॥
यदस्त्रभीत्याधिपतौ निधीनां कैलासशैलाभ्रनिकुञ्जभाजि ।
मुक्तालका प्रोषितभर्तृकेव न निर्वृतिं तज्जनता जगाम ॥ ६४ ॥
मा यक्ष इत्यक्षरयुग्ममस्तु मम प्रतीपं प्रतिदित्सतोऽस्मात् ।
एवं विदित्वेव धनाधिनाथो धनैरनैषीत्परितोषमेनम् ॥ ६५ ॥
उत्सङ्गतः स्वप्रभवासु येन हृतासु हैमीषु लतासु तासु ।
मेरुर्मरुत्पातपतन्नमेरुपुष्पच्छलाद्बाष्पलवानमुञ्चत् ॥ ६६ ॥
आलानरज्जुं निजकुञ्जराणां मायं करोन्मामिति शङ्कमानः ।
निगूढरत्नेषु शिरःसु शेषः शेषामिवाज्ञां वहति स्म यस्य ॥ ६७ ॥

जगदिति दितिसंभवेन तेन
प्रसभमभीतिमता जितं विचिन्त्य ।
सुरपतिरथ तत्प्रतिक्रियार्थं
सममरैः सविधे विधेर्जगाम ॥ ६८ ॥

इति श्रीगुर्जरेश्वरपुरोहितश्रीसोमेश्वरदेवविरचिते सुरथोत्सवनाम्नि महाकाव्ये देव्याश्चरितनिवेदनो नाम द्वितीयः सर्गः ।

---

तृतीयः सर्गः ।

अथ ते मथितास्तेन दैतेयेनादितेः सुताः ।
पुरंदरं पुरस्कृत्य सद्म पद्मभुवोऽभ्ययुः ॥ १ ॥
सरागैरिव सारङ्गैः पीयमाना महर्षिभिः ।
उद्गिरन्तं गिरः स्वच्छा मेघमम्बुच्छटा इव ॥ २ ॥
बिभ्राणं पाणिपद्मेन वलक्षामक्षमालिकाम् ।
धार्यमाणं तयाप्यन्तः प्रीत्येव प्रतिबिम्बितम् ॥ ३ ॥

गलद्गङ्गाजलभ्रान्तिं यानहंसस्य यच्छता ।
चामरेण सरस्वत्या वीज्यमानमनेकशः ॥ ४ ॥
जिताभिनवकौसुम्भैः शुभैर्वपुरभीशुभिः ।
प्रातस्तनस्य तन्वानं द्विर्भावमिव भास्वतः ॥ ५ ॥
प्रापितानि कृतार्थत्वं जाग्रता ज्ञानचक्षुषा ।
क्षिपन्तं च(दि)क्षु चक्षूंषि भ्रग्रामय(र)दिदृक्षया ॥ ६ ॥
विलोक्य तत्र सावित्रीप्रियं पिप्रियिरे सुराः ।
कस्य न स्फातिमायाति दृष्टिर्दृष्टे पितामहे ॥ ७ ॥
(षड्भिः कुलकम्)

हर्षाश्रुजलकल्लोलविलसत्पुलकाङ्कुरे ।
स स्तुत्यं स्तोतुमारेभे रभसेन कृसुमजे ॥ ८ ॥
नमः समग्रवैचित्रीविधानोन्नेयशक्तये ।
शुभवेऽम्भोजतल्पाय सकल्पायातसिद्धये ॥ ९ ॥
श्रद्धया प्रेर्यमाणेयं वाणी मुक्ता(ग्धा) न(त्र)पावती ।
वचनातीत कान्त ते माहात्म्यमभिलाषते ॥ १० ॥
तत्त्वस्यानवबोधेन नासभावनया पुनः ।
असत्यमपि न स्तोत्रं श्रुतिज्ञ श्रोतुमर्हसि ॥ ११ ॥
गिरा परिकरः सोऽयमास्मान् कोपयुज्यताम् ।
ओङ्कारेणापि यद्वाच्ये न गुणास्त्वयि याचुमः ॥ १२ ॥
समेयं मूर्खतास्माकमपि विश्वविदा त्वया ।
यद्बोद्ध(द्धु) त्वत्प्रभावान्त न वयं न त्वमप्यलम् ॥ १३ ॥
एकः सृजसि पास्येकः एकः संहरसि प्रजाः ।
अद्वितीयतयाक्लिष्टः किल त्वमवतिष्ठसे ॥ १४ ॥
द्युमणिद्युतिना प्रादुर्भवता भवताद्भुतम् ।
सृष्टेरस्यादिमं सृष्टं समाप्यततमां तमः ॥ १५ ॥
विधाप्यविद्या नाकोऽपि नरको यदपेक्षया ।
मुनीन्द्रक्षुण्णवर्त्मानं त भवन्त भव विद्युः ॥ १६ ॥

चेतसश्चन्द्रमा जज्ञे जगच्चक्षुश्च चक्षुषः।
प्राणतस्ते जगत्प्राणो मुखादग्निश्चतुर्मुख ॥ १७ ॥
चित्रीयते चरित्रेण तावकीनेन नैव कः।
रजसैवं सुरश्रेष्ठ यद्बाल इव खेलसि ॥ १८ ॥
तत्किं यन्न त्वया चक्रे तत्किं येनासि नार्जितः।
तत्किं यन्न ददासि त्वं तत्किं यत्र न विद्यसे ॥ १९ ॥
अद्य यो विद्यतेऽस्माकमानन्दस्त्वदवेक्षणात्।
स नूनं मुनिसंवेद्य शतानन्देऽपि न त्वयि ॥ २० ॥
इति स्तुतिगिरः श्रुत्वा तेभ्यस्तामरसासनः।
उवाच लोचनोत्क्षेपप्रत्यक्षीकृतविस्मयः ॥ २१ ॥
किमद्य यौगपद्येन यूयमाजग्म निर्जराः।
निःश्वासधूमानुमितामितदुःखदवामयः ॥ २२ ॥
विधातुमक्षमाणीव गन्दाक्षादीक्षणं मिथः।
लक्ष्यन्ते शून्यलक्षाणि किमक्षीणि मरुत्वतः ॥ २३ ॥
अदम्भडिम्भसंरम्भकरम्भात्मंभरे हरेः।
किं शैलशूकरव्याधे व्याधामेध्यामला रुचिः ॥ २४ ॥
दुर्धराधरकम्पस्य कोपानलमनर्गलम्।
किं विष्णोर्विवृणोतीदं हृदयं कौस्तुभच्छलात् ॥ २५ ॥
तुलाय लाञ्छनस्याय रिपुस्तोमतमोपहः।
किं दिवा दीपवद्दण्डः खण्डितद्युतिरीक्ष्यते ॥ २६ ॥
महाविषाणां फणिनां कीनाशमहिषस्य च।
पश्यामः श्यामलां कस्मादाकृतिं निकृतामिव ॥ २७ ॥
हेमदं फणिभिश्छिन्नैरातपत्रमुपस्कृतम्।
हे मदं यादसामीश किमद्य तनुते न ते ॥ २८ ॥
कुतः सुतः पुलस्त्यस्य वयस्यः परमेशितुः।
विमानान्वित एवायमनासन्नेऽपि पुष्पके ॥ २९ ॥

विरोचनस्य रुक्मादकस्मादवलोक्यते ।
भग्नार्थेनेव निष्पन्ना न दीत्य(प्य)र्थेन भानुना ॥ ३० ॥
औषधीनामधीशोऽपि किं शोकव्याधिबाधितः ।
मेघं करमरुन्मानमुकुरच्छविमाच्छिदत् ॥ ३१ ॥
किं कुरङ्गकुरङ्गस्य कुरङ्गोऽसौ श्वसन्मुहुः ।
विघूर्णोति कुतोऽप्युच्चैः पलायनपरिश्रमम् ॥ ३२ ॥
दूरादेतेषु शान्तालिवैतालिकरवेषु किम् ।
दिग्गुञ्जरकपोलेषु दुर्भिक्षं दानसंपदाम् ॥ ३३ ॥
शक्तिदण्डं वहन्वैरिप्राणभिक्षाविचक्षणः ।
प्रतापाग्नीन्धनं ब्रह्मचारी किं नाचरत्यसौ ॥ ३४ ॥
निकारमप्रतीकारं सुपर्वस्विति कुर्वता ।
कृतान्तदन्तकाराय केनात्मा हन्त कल्पितः ॥ ३५ ॥
इति व्याहृत्य विश्रान्ते तत्र विश्वक्सूत्रिणि ।
गुरुर्गोत्रारिनेत्रान्तप्रेरितः प्रत्यवोचत ॥ ३६ ॥
चरेण वारितातङ्कः पङ्कजासन तेन ते ।
देवानेवं तिरस्कृत्य दैत्यः शुम्भो विजृम्भते ॥ ३७ ॥
शतधा रञ्जितं येन रिपुच्छेदात्रिविष्टपम् ।
शतधारं जितं तेन तदरं प्रख(द)रैः खरैः ॥ ३८ ॥
स्वर्ग्रामे ग्रामभट्टोऽसि स्फुटामस्य व्यवस्थितिम् ।
तन्मां ब्रूहीति तेनाहमाक्षिप्तः क्षिप्तजिष्णुना ॥ ३९ ॥
कल्पाङ्घ्रिपेषु दोलाभिर्लोलाभिः क्लृप्तकेलयः ।
मुदास्य दास्यो गायन्ति स्वर्जयोपार्जितं यशः ॥ ४० ॥
जिगाय नायकं वीनां नवीनां दधदुद्धतिम् ।
यदाजौ तज्जयत्ये(यादे)प विद्वेषीति स्फुटोऽभवत् ॥ ४१ ॥
क्रियां कामप्यकुर्वाणः स तपस्वी सुदर्शनः ।
भयादिव दुरुच्छेदादैत्याद्रि कुण्ठतां गतः ॥ ४२ ॥

दभ्रे च माहिषेणैप बलेनोच्छूनतां गतः ।
अमुना यमुनाबन्धुर्भिषजेवातिलङ्घितः ॥ ४३ ॥
तेन निष्करुणेनास्त्रैर्वरुणे सव्रणे कृते ।
अपाशस्तस्य नो पाणिरनुजीविजनोऽप्यभूत् ॥ ४४ ॥
प्रचेतःप्रेरिताः पाशास्तस्मिन्मोघा न केवलम् ।
उक्ताः सर्पाधिभिस्तैस्ते प्रतीपाक्षरा अपि ॥ ४५ ॥
वाति मन्दमनानन्दः समीरस्तस्य संसदि ।
स्वभावभीषणाकारभ्रूकृष्णभुजगीभयात् ॥ ४६ ॥
समित्या तेन धीरेण वादिनेव व्यधीयतः ।
असमर्थितपक्षोऽयं धनाध्यक्षो निरुत्तरः ॥ ४७ ॥
रुद्रैरुन्मुद्रितं तसैस्तेजः सूर्योपलैरिव ।
न किंचिदपचक्रेऽस्य तपतस्तरणेरिव ॥ ४८ ॥
सप्तजिह्वो द्विजिह्वेन तेनाजौ विह्वलीकृतः ।
विजहौ सहसा तीक्ष्णां हेतिं स्वहितहेतवे ॥ ४९ ॥
रणाङ्गणेऽवगणितस्तेनायं गणनायकः ।
धातर्यदपराधानामपि स्वं गणनाय कः ॥ ५० ॥
अयं तेने तथा तेन निस्तेजास्तेजसां निधिः ।
यथा दिवापि चक्राह्वैः कथंचिदुपलक्ष्यते ॥ ५१ ॥
अखण्डमण्डलाग्नोऽसौ याति यामिकतां निशि ।
विष्णुस्तदवरोधेषु रोद्धुं मानमलिम्लुचम् ॥ ५२ ॥
सलीलं लायसं(सय)न्तोऽमी ऋतवो मतनीः प्रियाः ।
कृतोद्यमास्तमु(दु)द्याने जायाजीवा इवाभवन् ॥ ५३ ॥
फटकैर्धृतगन्धर्वैर्मत्वेवात्मसमोदयम् ।
उत्खातशृङ्गशृङ्गारं स चक्रे काञ्चनाचलम् ॥ ५४ ॥
सोमाहुतीः पतन्तीर्नः सोत्तरा हरते हठात् ।
दुर्वार(त) इव वार्धाराश्चातकानां पिपासताम् ॥ ५५ ॥

भुजगेन्द्रान्भुजस्तम्भससक्तजयकुञ्जर ।
तुदत्याशीविषानेष दुराचारो गुरूनिव ॥ ५६ ॥
वाडवाग्निच्छलादन्तर्दधाना दु खपावकम् ।
दत्वा रत्नौघमुद्धोपे स्तुवन्तीव तमव्धय ॥ ५७ ॥
अश्रुमिश्राणि नेत्राणि य करोत्यरियोषिताम् ।
महाबलेन तेनाय धूतो धूम इवाग्निभू ॥ ५८ ॥
तेनैवमभिभूताना गतिस्तात त्वमेव न ।
दावपावकदूनाना तरूणामिव तोयद ॥ ५९ ॥
तवादेशाज्जगद्वर्धैर्ये पूर्वं वन्धता गता ।
गृहीत्वार्थं निरस्तास्ते लेखालेखा इवामुना ॥ ६० ॥
पूज्या स्थानस्थिता एव दातुमर्थमपि क्षमा ।
अवाच्या सस्ततो भ्रष्टा शब्दा वेदभवा इव ॥ ६१ ॥
किं वा निवेद्यते वीचा मनसा ज्ञानिनस्तव ।
न हि दीपद्युता भानोर्भावाभोग प्रकाश्यते ॥ ६२ ॥
तस्मादस्माकमानन्दकन्दली कमलासन ।
शिरोबिन्दुवियुक्तेन कुम्भेनाङ्कुरिता कुरु ॥ ६३ ॥
इति श्रुतिकवि श्रुत्वा वचो वाचस्पतीरितम् ।
प्रत्युवाच प्रिया वाच स वाचयमसेवित ॥ ६४ ॥
अल क्लिशित्वा गीर्वाणास्त्राणाय प्रभुरस्ति व ।
शैलराजात्मजा दैत्यव्याधिविध्वसनौषधी ॥ ६५ ॥
पुरा दुराशयेनापि तप्त्वा तेनाद्भुत तप ।
प्रार्थितोऽस्मि स्थिरमाणा भुवनत्रयभर्तृताम् ॥ ६६ ॥
आशुश्रुवे मया तस्मै स्त्रीहृतादन्यदत्ययात् ।
तदप्यङ्गीकृत तेन गर्वबाधितबुद्धिना ॥ ६७ ॥
तदित सत्वर गत्वा गुहमातामह गिरिम् ।
स्तुतप्रस्तुतकार्याय शम्भोरम्भोजलोचनाम् ॥ ६८ ॥

---

१ शिरोरूपबिन्दुना हीनन कुम्भेन दानवेनानुस्वारच्युतकुम्भन कुभन २ शातक्रति

पूरयिष्यति यौष्माकान्कामान्कामारिकामिनी ।
नैसर्गिकं हि वात्सल्यमपत्ये मातुरातुरे ॥ ६९ ॥
उपसंगृह्णतामेतामपेताशेषविद्विषाम् ।
भुक्त्याधिवेत्स्यमानायाः पतित्वं भवति श्रियः ॥ ७० ॥
रुरुकासरघातिन्या तथा पञ्चाननस्त्रिया ।
कृता काननसंपत्तिः पुराप्यस्तभयज्वरा ॥ ७१ ॥
वाचा वृष्ट्येव सिञ्चन्सुमनसामास्यानि सस्यानि वा
विभ्रन्ति ग्लानिमम्भोधर इवाम्भोजध्वजोऽन्तर्दधे ।
ते च प्राचीनबर्हिःप्रभृतयः प्रालेयपृथ्वीधरा-
धारामाराद्रुमीशमणयिनीमुत्साहभाजोऽभवन् ॥ ७२ ॥
रिपुनृपनिलयं श्रियः श्रितायाः पुनराकर्षणमन्त्रवन्मनोज्ञम् ।
पतिरिति निगदन्नुमाचरित्रं नृपतेस्तस्य धृतिं न्यधत्त चित्ते ॥ ७३ ॥

इति श्रीगुर्जरेश्वरपुरोहितश्रीसोमेश्वरदेवविरचिते सुरथोत्सवनाम्नि महाकाव्ये विरश्चिवर्णनो नाम तृतीयः सर्गः ।

---

चतुर्थः सर्गः ।

सितमरीचिरुचामिव संचयं हसितराशिमिव त्रिपुरद्रुहः ।
धनपतेर्यशसामिव मण्डलं समुदयं शरदम्बुमुचामिव ॥ १ ॥
क्वचन काञ्चनकेतककेतनं क्वचन बालतमालसमाकुलम् ।
क्वचन किंनरगानमनोरमं क्वचन निर्झरपातपवित्रितम् ॥ २ ॥
तुहिनवाहि नवाश्मसमुच्चयं घनलतानलतालनिरन्तरम् ।
निरघसारघसारणिपिच्छिलं पुरुचमूरुचमूरुचिरश्रियम् ॥ ३ ॥
सबकशावकशाखिशतं प्रियासहितरोहितरोहितशम्बरम् ।
असमहंसमहं दधतं सरोरुहसमृद्धसमृद्धमदं सरः ॥ ४ ॥

---

१. इह लोके भुक्तिभाजस्त्व परलोके मुक्तिभाजश्च भवतीति भावः. २. दुर्गा तु इन्दुमद्विपदैत्ययोः सिंही तु मृगमद्विपयोर्घातिनी. ३. मनांसि वक्त्राणि मनांसि च. ४. एत- दर्थविषयव्याख्यानं स्फुटरूपेण ग्रन्थसमाप्त्यनन्तरे प्रदर्शयिष्यामः.

विशदतोयदतोयहतानलं सनिनदातिनदातिमनोहरम् ।
तगरसालरसालमृदुच्छदप्रसवराजिवराजिरकन्दरम् ॥ ५ ॥
चपलया कलितं कपिमालया चपलयालिरुतस्तुतसंपदम् ।
गजवता विपिनेन वृतं मनागजवतास्पदमारुतशालिना ॥ ६ ॥
'सवनराजितमश्रमहासरः सवनराजितदेहयतिव्रजम् ।
परशुनासनरामनिषेवितं परशुभासनतीर्थपरंपरम् ॥ ७ ॥
पवनदेवनदेवनगस्फुरन्मधुकरालिकरालितपङ्कजम् ।
विविधवमधवप्रतिशादिताभिनवपुष्पवपुष्पव(ट)वेष्टितम् ॥ ८ ॥
शबरताडितमत्तमतङ्गजं शबरताखिलफेल(र)वभैरवम् ।
समरसीमगतोद्धुरकासरं समरसीकृतचित्ततपोधनम् ॥ ९ ॥
दिविषदो विपदोपजिदौषधीमधुरसानुरसानुगतद्रुमम् ।
तरुणवारणवारमदच्छटानधमगन्धमगं ददृशुस्ततः ॥ १० ॥
(दशभिः कुलकम्)
नवनवाननवानरमण्डलीघटितरूपतरूपचितं नगम् ।
सुरविभू रविभूषितपङ्कजाकरसरोरसरोचितमभ्यगात् ॥ ११ ॥
तुहिनसानुमतः कमनीयतामवलुलोकयिषोः शिखरिद्विषः ।
किमपि मातलिना नगवर्णनं निजगदे जगदेकविभोः पुरः ॥ १२ ॥
अयमुद्ग्रतया गगनाङ्गणं पृथुतया पृथिवीवलयं विभो ।
तलविशालतया च रसातलं तिलकयत्यतुलः कुलभूभृताम् ॥ १३ ॥
रजतकाञ्चनरत्नमयस्थलीकिरणतोरणतोषितदिग्मुखः ।
क्षितिधरानपरानवनीभृतां पतिरयं तिरयन्निव राजते ॥ १४ ॥
जपरता परतापमकुर्वती शमरतामरतारहिता स्वहम् ।
इह वने ह्यवनेद्ध्रुतादाने यतिम्भानिमभा जयतीश्वरम् ॥ १५ ॥
इह मनोभवतापभरच्छिदे हिमलयामलयाधिकसंगदि ।
निदधते कुमुदच्छदमंसतीरसि ता रसिनाः सुरयोषितः ॥ १६ ॥
इह मिते हमिते शिरसा स्पाधुपरने पर्मेधस्चाटुभिः ।
वशमिते शमिते न निनाय तं स मदनो मदनोदितमार्गणः ॥ १७ ॥

रमते वियतायमगः खचरानव तानवतानवतानवता ।
यतिपङ्क्तिरियं च पुरो विरमद्भमना गमनागमनागमना ॥ ३१ ॥

इह सल्लकीदलचयानदता करिणां गणेन मधुरं नदता ।
वद्रुभिर्मदाम्बुभिरनूनदता क्रियते स्थलेऽपि सहसा नदता ॥ ३२ ॥

मारुताहतिमरुच्चरुपुष्पैः पाकपेशलरसैश्च फलौघैः ।
आदरादुपनयत्ययमद्रिः प्राभृतं त्रिभुवनैकविभोस्ते ॥ ३३ ॥

घनतुहिनशिरोभिशृङ्गमुच्चैरुपरि विपण्णनवाम्बुवाहमेतत् ।
भजति भुजगराजभोगशय्यासुखशयितासुरवैरिणो विलासम् ॥ ३४ ॥

तालावलीमर्पितभोगतानां नभोगतानां निकटे तटीनाम् ।
भङ्गीगणो गच्छति वासवेह न वासवे हः सममात्मकान्तेः ॥ ३५ ॥

हरिणीयमुपैति तटीमृगणे कुशला कुशला कुशला कुशलाः ।
तरुराजिरसौ मुदमातनुते मधुरा मधुरा मधुरा मधुरा ॥ ३६ ॥

पश्यैतदुत्तमसुमासवमत्तभृङ्गं
शृङ्गं यतः प्रभवति स्म सुरस्रवन्ती ।
मातेव या सितकरांशुनिभैः पयोभिः
प्रीताः प्रजाः सवितुरङ्कगताः करोति ॥ ३७ ॥

नदीयमानन्दमहो ममाथ विकस्वरैर्व्याकुरुते सरोजैः ।
न दीयमानं दमहोममाद्यन्मना मुनिश्चैष जिघृक्षतेऽर्थम् ॥ ३८ ॥

तोयोत्सर्गात्पाण्डुरिमाणं प्रथयन्तीं
पाथोदानां पङ्क्तिमदूरे विचरन्तीम् ।
पश्यत्यस्मिञ्जङ्गमशृङ्गावलिबुद्ध्या
मुग्धः सिद्धस्त्रीनिवहो विस्मयमानः ॥ ३९ ॥

पर्वतपङ्क्तिपताविह वल्गत्कुञ्जरकुञ्जरकुञ्जसमाजे ।
कासरसंततिरातनुतेऽसौ सङ्गरसंगरसह्यवलम्भैः ॥ ४० ॥

गीतानुरक्ताः सुमनःप्रसक्ता नक्तंदिवं चारुभुवं भजन्तः ।
वसन्ति कान्तासिह कन्दरासु विलासवन्तश्च सुखुखश्च ॥ ४१ ॥

गन्धर्वीणां गीतिभिः पीतचित्तामेणीश्रेणीं वीक्ष्य दूर्वां नवां च ।
अत्र क्रीडाकाङ्क्षया शीतरश्मेरेणः शङ्के नेच्छति स्थातुमङ्के ॥ ४२ ॥
अमुं जवनतः स मुञ्जवनतः प्रयाति शिखरान्मृगं मृगरिपुः ।
अरं कुरवकं सरङ्कुरवकंसमेत्य रमते मुदात्र मधुपः ॥ ४३ ॥
गाङ्गेयजुष्टैः कटकैः समन्तादाप्तोन्नतिर्द्रोणशकुन्यपेतैः ।
दुर्योधनीयत्ययमङ्गराजरुचिं दधानः कृतभारतश्रीः ॥ ४४ ॥
विपिनमिदं मुदमातनुते मे कपिशतरूपितमञ्जुलतालम् ।
इयमपि भूर्नवमञ्जरिमाला कपिशतरूपितमञ्जुलतालम् ॥ ४५ ॥
वैदूर्यगारुत्मतपद्मरागपरागशृङ्गारितशृङ्गराजः ।
असौ कुथेन प्रथितामभिख्यामधः करोत्यभ्रमुवल्लभस्य ॥ ४६ ॥
नवीनाम्बुवाहद्युतीनां समालं समालं समालम्ब्य शृङ्गौघमत्र ।
ततिः पट्पदानां सदा वालसालालसालालसा लासमाविष्करोति ॥ ४७ ॥
सुवर्णशृङ्गाणि निजांशुदण्डैश्चण्डांशुपादप्रतिमैरमुष्मिन् ।
दिनावसानेऽपि वियोगशङ्कां कोकाङ्गनानां गलहस्तयन्ति ॥ ४८ ॥
कुर्वते केलिमत्र प्रियासङ्गता वानरा वानरा जीवना जीवनाः ।
वारिदेनोज्झता संह्रियन्ते पयः खेलता खे लतापल्लवा पल्लवाः ॥ ४९ ॥
अथ नोदकैः सुरवधूनिवहः सघनोदकैश्च रुचिरे शिखरैः ।
अमरालयादिह समेत्य गिरौ समरालया द्युसरिता रमते ॥ ५० ॥
रूप्यस्थलीनामयमंशुजालैर्वलक्षिताशेषदिगन्तरालैः ।
कीर्तिप्रतानैरिव तायमानः पुनाति पङ्क्तिं धरणीधराणाम् ॥ ५१ ॥
याति रतिं भ्रमरः स्फुरदन्तःकेसरके सरके सरकेऽस्मिन् ।
घर्मदिनेष्वपि साम्भसि शोषं तापनतापनतापनताली ॥ ५२ ॥
शृङ्गेऽत्र तेपे परमं तपस्तदनङ्गदाहाभिभवाद्भवानी ।
जग्राह सा येन शरीरमर्धमर्धेन्दुमौलेः सकलं मनश्च ॥ ५३ ॥
शशिबिम्बमिहापचयं नयते सकलङ्कमलं सकलं कमलम् ।
कुमुदं च पुरः कुरुते भ्रमरी वरलासहितं वरलासहितम् ॥ ५४ ॥

क्षमां दधानोऽपि न धर्षणीयः पूर्णोऽपि रत्नैरनवाप्य(प्त)भङ्गः ।
प्रालेयपादोऽप्यकलङ्कितश्रीरसावनन्तोऽपि न तु द्विजिह्वः ॥ ५५ ॥
न रैरतः कोऽप्यफलः प्रयाति नैरेरतः सेवितसानुपङ्क्तिः ।
नभोजनानामपि दुर्लभानि न भोजनान्यातनुते न चायम् ॥ ५६ ॥
तुषारगौरेषु तटेषु सान्द्रचन्द्रप्रभाभिः पिहितान्तरेषु ।
वधूर्विदग्धापि धरेऽत्र शङ्के संकेतमार्गं निशि नाशु वेत्ति ॥ ५७ ॥
विहाय साडामकृतान्कुलायान्विहायसामालिरपात्तपक्षा ।
विहायसा गच्छति तुङ्गसानाविहायसामाकरकोटिरम्ये ॥ ५८ ॥
वनस्य नानाद्रुममण्डनस्य किमस्य माहात्म्यमुदाहरामः ।
यस्मिन्नुमालोकनलोलदृष्टिः कटाक्षितश्चित्तभुवा भवोऽपि ॥ ५९ ॥
शीताः समीराः प्रशमं पिपासां विनोदकैरत्र सतां नयन्ति ।
तेषां तदन्यत्र मनांसि शृङ्गैर्विनोदकैरत्रसतां नयन्ति ॥ ६० ॥
श्रुत्वा वनेऽस्मिन्मदनस्य दाहमुद्दीयमानं सुरसुन्दरीभिः ।
अद्यापि देवे निदधाति देवी प्रकोपगर्भाणि निभालनानि ॥ ६१ ॥
तदेतदग्रे नगरं नगेन्द्रोर्ध्वदीपधिमस्तमिति प्रसिद्धम् ।
रत्नाभिरामे रमतेऽत्र लक्ष्मीर्वक्षःस्थले वा जलजन्मनाभेः ॥ ६२ ॥
ताः सन्ति दृश्याः सुदृशः पुरेऽस्मिन्यद्दर्शनोद्दीपितमन्मथानाम् ।
महामुनीनामपि कम्पमानात्कराद्द्रवन्ति द्रुतमक्षमालाः ॥ ६३ ॥
पुरसुन्दरीणां समता कथं स्यात्पातालनारीभिरधःकृताभिः ।
भवेत्कथं वा त्रिदिवाङ्गनाभिर्याः संततं सन्ति विमानवत्यः ॥ ६४ ॥
जलश्रियाः सिद्धसरिज्जलेन फलद्रुमाणां कुसुमैः सुमार्याः ।
भवन्ति यत्र ज्वलतां मणीनामुच्चैस्तमिस्रारहितास्तमिस्राः ॥ ६५ ॥
सरः पुरः काञ्चनपद्ममेतद्विभाति सन्ध्यानमभानसाम्यम् ।
दृष्टं तपान्तेऽपि न पद्मिनीनाममङ्गलं यत्र चन्द्रपादैः ॥ ६६ ॥

शैलेऽस्मिन्फलपुष्पपल्लवगणोल्लासः सदा शाखिनां
पद्मिन्यः प्रतिवत्सरं न दधते ह्रासं हिमर्त्तावपि ।

शैत्यं शाश्वतमम्भसां भवति च स्वर्गाङ्गनानां गुहा-
गेहद्वारविहारिवारिदघटागर्जाभिरुज्जागरः ॥ ६७ ॥
क्वचिदिह विहरन्तीर्वीक्षमाणस्य रामाः
प्रसरति रतिरन्तर्मोक्षमाकाङ्क्षतोऽपि ।
क्वचन मुनिभिरर्थ्यां पश्यतस्तीर्थवीथीं
भवति भवविरक्ता धीरधीरात्मनोऽपि ॥ ६८ ॥
तावल्लावण्यलक्ष्मीः कलयति मलयस्तावदाविष्करोति
क्रौञ्चश्चेतोहरत्वं हरधरणिधरस्तावदभ्येत्यभिख्याम् ।
तावद्गर्वं सुपर्वक्षितिभृदपि दधात्युद्धतत्वं च विन्ध्य-
स्तावद्धत्ते धराणां पतिरतिरुचिरो दृश्यतेऽसौ न यावत् ॥ ६९ ॥
श्रियमिति शिखरान्तभ्रान्तजीमूतवृन्द-
ध्वनिजनितशिखण्डिस्त्रीमदाद(ड)म्बरेऽस्मिन् ।
नगरिपुरपि पश्यन्मिश्रितानामुदस्रै-
रमनुत चरितार्थं लोचनानां सहस्रम् ॥ ७० ॥

इति गुर्जरेश्वरपुरोहितश्रीसोमदेवविरचिते सुरथोत्सवनाम्नि महाकाव्ये
हिमालयवर्णनो नाम चतुर्थः सर्गः ।

---

पञ्चमः सर्गः ।

नगेऽथ तस्मिन्नृतुचक्रमागमन्निषेवितुं निर्जरचक्रवर्तिनम् ।
फलप्रसूनैरुपपादितोपदाः सदा भजन्ते हि विभुं बुभूषवः ॥ १ ॥
अगस्त्यपस्त्याङ्गणवल्लिवेल्लिना नभस्वता दत्तकरावलम्बनः ।
अशीतसंतापनिवासवासरः स्मरैकमित्रं समयः समाययौ ॥ २ ॥
प्रतापकल्पे मलयाद्रिमारुते नृपानिवोच्चैर्नमयत्यनोकहान् ।
न कोऽपि कामस्य जगाम वामतामवामकर्णान्तमधिज्यधन्वनः ॥ ३ ॥
सरागदृष्टिर्मधुरं च पञ्चमं प्रपञ्चयन्ती सहकारहारिणा ।
भवेन्न मत्ता मधुना पिकी तथा यथा परेषामपि दाशुषी मदम् ॥ ४ ॥

सुधा सुधांशुप्रमुखं जयोन्मुखः परिच्छदं पुष्यति पुष्पसायकः ।
यदस्य योषिज्जनमानमाथिभिः पिकस्वरैरेव कृता कृतार्थता ॥ ५ ॥
यथा यथा नूतनचूतमञ्जरी गरीयसीमाप रसेन संपदम् ।
तथा तथा पान्थपयोजलोचनामनःसु माहात्म्यमियाय मन्मथः ॥ ६ ॥
हिमेन पद्मेषु कृतामपक्रियामवेक्ष्य कृत्वाथ महाबलं पुरः ।
हिमालयं जेतुमिवोत्तरां दिशं प्रति प्रतस्थे तुहिनेतरद्युतिः ॥ ७ ॥
वसन्तकालः किल वेदवेदिभिर्द्विजन्मनामग्निपरिग्रहे मतः ।
इतीव यज्वप्रभुरुज्ज्वलांशुकः प्रवासिकान्ताहृदयेऽग्निमादधे ॥ ८ ॥
सरःसु न स्मेरसरोजराजिषु प्रवालविभ्राजिषु काननेषु न ।
नवेषु नो वेश्मसु पान्थयोषितां ननन्द कन्दर्पकदर्थितं मनः ॥ ९ ॥
कटाक्षिता कैरपि चुम्बिता परैः कृतोपभोगा मधुपैश्च कैश्चन ।
मधुक्षरन्ती विरराज माधवी नवीनरूपा गणिकेव कामिभिः ॥ १० ॥
स्वयं समानीय जलानि यन्मया तवालवालप्रणयीनि चक्रिरे ।
अकार्यतानेन च पाणिपीडनं वरेण माकन्दमहीरुहेण यत् ॥ ११ ॥
सदैवमाजन्मसखित्वमावयोः प्रवृद्धमेतत्तु तयाद्य विस्मृतम् ।
यदीदृशीं मे सखि वीक्ष्य दुर्दशां त्वमुन्मदा गायसि भृङ्गनिःस्वनैः॥१२॥
इतीरिता वल्लभविप्रयुक्तया कयापि कान्तारमुपेत्य माधवी ।
भवत्युपालम्भपदं हि दुःखिनां तदर्तिसंविद्विमुखः सुहृज्जनः ॥ १३ ॥
(त्रिभिर्विशेषकम्)
मघोरधःकृत्य तदूर्जितं जवान्मनोभवाभीप्सिततया श्रितः श्रिया ।
विराजमानो वनमालयाप्यलं महीतलं मण्डयति स्म माधवः ॥ १४ ॥
पुरः स्थितं ज्येष्ठमवेक्ष्य किंशुकप्रसूनकौसुम्भकृतावगुण्ठना ।
वधूरिवाकुञ्चितकोकिलस्वना वसन्तलक्ष्मीरपसर्तुमुद्यता ॥ १५ ॥
मदप्रकर्षं मदनस्य मन्दयन्मधौ सहायेऽपि गृहीतकृत्तिकः ।
विषप्रपाणप्रवणः श्रितो वृषं प्रकाशयामास शशांशुरुग्रताम् ॥ १६ ॥
निशाः कृशाः स्मीतराश्च वासराः परागसंपर्कघनाः प्रभञ्जनाः ।
तनूभवत्तोयचया जलाशया प्रयाणकाले सुरभेर्बभासिरे ॥ १७ ॥

कचेषु गृह्णन्कुचकुम्भयोर्लुठन्नितम्बबिम्बस्थितमम्बरं हरन् ।
तनूं च तन्वन्पुलकप्रसाधितां जलप्रवाहः सुदृशां प्रियोऽभवत् ॥ १८ ॥
दिवापरार्द्धं तुहिनेतरत्विषा मृगीदृशां यत्तपतातिकर्कशम् ।
निशाधिपेनैकपदेऽपि तन्निशामवाप्य लुप्तं किरतामृतच्छटाः ॥ १९ ॥
शिरीषपुष्पैरचतसन्ति(तंसि)तश्रवा नवां वहन्पाटलिमल्लिकास्रजम् ।
वधूजनश्चन्दनचर्चितस्तनः शुचौ शुचं मङ्क्षु ममन्थ मान्मथीम् ॥ २० ॥
अथौचराहः प्रसभं प्रभञ्जनस्तपात्ययस्येव पताकिनीपतिः ।
प्रतापिनं घर्ममिभैरिवाम्बुदैः समूलमुन्मूलयितुं प्रचक्रमे ॥ २१ ॥
इरम्मदस्यारणिभिर्दिनाधिपक्षपाधिपप्रांशुरुचां निचोलकैः ।
कृपीवलानां कुलदैवतैः कृतं नभस्तलं दर्दुणमब्दमण्डलैः ॥ २२ ॥
न यावदम्भःप्रसरं वितेनिरे निरन्तरासारधराः पयोधराः ।
सितच्छदैस्तावदयोगकातरैस्तरङ्किता बाष्पजलैः सरोजिनी ॥ २३ ॥
रजः पुरा मुद्रितमार्द्रता ततस्ततोऽथ पङ्कावसरोऽपि रोपितः ।
अनन्तरं वारितरङ्गिता कृता घनैर्घनासारधरैर्वसुंधरा ॥ २४ ॥
नगैर्दिगन्ते जलदैर्नभस्तले नवाङ्कुरैर्भूवलये च मेचके ।
विशालनीलोपलपञ्जरोदरस्थितं जनः स्वं मनुते स्म विस्मितः ॥ २५ ॥
कृतार्जुनामोदभरेण बिभ्रता सदागदावस्थितिहारिणीं दशाम् ।
अधार्तराष्ट्रं भुवनं वितन्वता पयोदकालेन वृकोदरायितम् ॥ २६ ॥
असंशयं प्राक्तनवृष्टिबिन्दवः सुधांशुतीक्ष्णांशुमरीचिनिर्मिताः ।
यदेककालं प्लवगाङ्कपुष्टये यवासकप्लुष्टिकृते च जज्ञिरे ॥ २७ ॥
मनोरमास्तापि कलापिसंकुलाः कुलायविश्रान्तपतत्रिपङ्क्तयः ।
स्फुरद्भिराढ्याः कुटजैः प्रवासिनां सुदुर्गमाः काननभूमयोऽभुवन् ॥२८॥
घनाकुलायां कुलटाकुलैर्निशि प्रकाशयन्ती ककुभस्तडिल्लता ।
स्तुता दुरालोकपथावलोकनाज्जनाभिशङ्काभरतश्च भर्त्सिता ॥ २९ ॥
रराज जम्बूनिवहः सहस्रधा फलैः समृद्धः सविधे सरस्वतः ।
नभस्तलान्नीरभराभिकाङ्क्षया पयोदसंदोह इवावतीर्णवान् ॥ ३० ॥

१. अगेषु दानः, पक्षे गदायुधम्. २. जगत्, अर्त्त ग. ३. समुद्रस्य.

दवाग्निदग्धैरपि रूढमङ्कुरैः पयोधरे दुर्धरमम्बु मुञ्चति ।
न खण्डितानां कथमप्युदश्वसद्वियोगवह्निज्वलितं मनः पुनः ॥ ३१ ॥
इदं रविर्नाम जगद्विलोचनं पिधीयमानं घनपक्ष्मपङ्क्तिभिः ।
दवाग्निधूमैश्चपलाञ्चलैस्तथा कृतव्यथं वारि किल व्यमुञ्चत ॥ ३२ ॥
वियोगिनीभिर्यदरक्षि जीवितं कथंचिदप्युन्मदकेकिनिःस्वनात् ।
विकस्वराम्भोधरडम्बरेऽम्बरे तदुल्लपन्त्यापहृतं बलाकया ॥ ३३ ॥
सुधांशुधामोज्ज्वलयाम्बरश्रिया चकासती चामलकाशचामरैः ।
विजृम्भिताम्भोरुहचारुलोचना नरेन्द्रनारीव शरद्यराजत ॥ ३४ ॥
समागतोऽयं समयः पितृप्रियस्तदत्र यात्रागमनं मतं सताम् ।
इतीव कृत्वा हृदि दक्षिणाशया स्फुटं बभूव प्रकटो घटोद्भवः ॥ ३५ ॥
सरोजिनीसङ्गसमुक्तचेतसां मनोरमामानसवासिनां स्वनाः ।
पदं दधत्याः शरदः शनैः शनैरशिश्रियन्नूपुरशिञ्जितश्रियम् ॥ ३६ ॥
सुरारिशत्रुः शरदि प्रबोधतीत्यहो वचस्तथ्यमिदं मनीषिणाम् ।
तदक्षिणी चन्द्रदिवाकराविमौ विकासमाजग्मतुरन्यथा कथम् ॥ ३७ ॥
विमुच्य लक्ष्मीमिव विद्युतं शिरः सितं वहद्भिर्विषयेषु नीरसैः ।
पयोधरैर्विष्णुपदाभिवर्तिभिस्तपःप्रपन्नैरिव मौनिभिः स्थितम् ॥ ३८ ॥
जलं प्रसन्नं जलदा निवर्तिताः प्रवर्तिताश्चाध्वनि साधुसिन्धवः ।
गदाधरः स्वापपरः प्रबोधितः शरद्दिनैर्निर्मलतोचितं कृतम् ॥ ३९ ॥
गभीरगर्जा वृषभेषु नीलिमा नभस्तले विक्रमशालिपून्नतिः ।
विभज्य निःक्षिप्तमिति स्वमम्बुदैर्ध्रुवं विदित्वात्मदशामनीदृशीम् ॥ ४० ॥
कुलं तदुत्तीर्णजलं तडित्वतां विलोक्य भेकप्रकरैः पलायितम् ।
विपक्षता च प्रथिता शिखण्डिभिर्विभूत्यभावे महतोऽपि कः सुहृत् ४१
प्रफुल्लकर्णोत्पलपातिषट्पदप्रियारवस्फारितचारिमर्धिभिः ।
मुदं ददुः कस्य न शालिपालिकाः स्वराग्निपूर्णाहुतिभिः सुगीतिभिः ॥ ४२ ॥
अलं धवित्वा यदपत्रपामहे तपत्यसौ तापयतु प्रजा रविः ।
कृता पयोदैस्तुहिनाच्च भाविनी विबाधतेऽन्तर्नहि यत्तिरस्क्रिया ॥ ४३ ॥

१. प्रतिप्रहाराया च. २. देशेषु, इन्द्रियार्थेषु च. ३. पक्षरहितत्वम्, शत्रुत्व च.

पयः प्रसत्तिर्नलिनीवनोद्गमः समं च मैत्री वरलाविलासिभिः।
तटस्थपङ्कप्रसरापसारणं सरःसु चक्रे शरदा न किं तदा ॥ ४४ ॥
जलेषु शीतेषु मनागनादरो न रोचते किंचन चन्दनद्रवः।
निषेव्यते यत्र तथा न कौमुदी मुदं ददाति स्म तदप्यसावृतुः ॥४५॥
यवाङ्कुरैः कीरशरीरसोदरैर्निरन्तराः क्षेत्रवसुंधरा बभुः।
तुषारसंभारभयेन मेचकैर्दुकूलकूटैः कृतवेष्टना इव ॥ ४६ ॥
वदन्तु ते हन्त नितम्बिनीकुचाः समुद्धतिं यैः शरणागताः प्रियाः।
मृदुस्वभावादपि दुःसहादलं तुषारतश्च स्मरतश्च रक्षिताः ॥ ४७ ॥
सहसि ताण्डवितस्मरकेलिभिः सह सितांशुमुखीभिरभिक्षपम्।
उपहसन्ति तुषारसमीरणानुपहसन्ति गताः स्म विलासिनः ॥ ४८ ॥
परमहिमघनाम्बुभिः शुभंयुर्मुकुलितमांसलपुष्पदन्तकान्ति।
अलभत शिखिवल्लभो नभस्यश्रियमलसश्रि सरोरुहः सहस्यः ॥ ४९ ॥
गर्भागारे शयनमनलः संनिधौ सत्वधूमः
श्यामाश्लेषः स्मरपरवशो रक्तवस्त्रावृतिश्च।
कर्पूरश्रीर्वदनकमले कुङ्कुमैरङ्गरागो
मार्गैरेतद्भवति भविनां हन्त हेमन्तकाले ॥ ५० ॥
ऋतुरुज्जगाम जडिमैकभाजनं
क्षममेतदत्र कमलोन्नतिर्न यत्।
हृदयानि यस्तनुभृतां प्रकम्पय-
न्सुमनःपदेषु निदधाति बालकान् ॥ ५१ ॥
द्रुततरमुपयाति भानुरस्तं गुरुषु निशासु निशापतिर्न भाति।
स्फुटमिति कुलटाः सुखाभिसारादनुतुहिनर्तुमगंसतापरर्तुम् ॥ ५२ ॥
अपि लघूनलघूनिव वासरान्गमयता पथिकेन कथंचन।
विरहतापहतापघनश्रिया शुचिसमः शिशिरर्तुरमन्यत ॥ ५३ ॥

---

१. यथा शरदि. २. हेमन्तः. ३. मार्गशीर्षे. ४. अङ्गारशकटिकासमीपे. ५. कठिनम्, मेघाश्च. ६. चन्द्रार्कौ. ७. बर्हिः, मयूरश्च. ८. पीनः. ९. शिशिरः. १०. पद्मानि, लक्ष्मीश्च. ११. पुष्पाणि, पण्डिताश्च. १२. अलकान्, ह्रीबेराणि च.

आसाद्यते चिरगतेष्वपि या न सातिं
निद्रावशादनभिशायिपु वल्लभेषु ।
लब्धावकाशतुहिनोद्धुषितस्तनीभि
र्लेभे क्षणादधिनिशं हरिणेक्षणाभिः ॥ ९४ ॥

अथ दन्तकुन्दपतनाद्विनश्वरं शिशिरं विभाव्य सुरभेर्बुभूषतः ।
समयानुरूपवचनैः पिकेश्वरैः कृतपत्रबन्धमुपनेपिरे द्रुमाः ॥ ९५ ॥

लभन्ते सौभाग्यं किमपि हरिणाङ्कस्य किरणा
पिकाः शब्दायन्ते स्वगतममृतस्यन्दि च तदा ।
चलत्यद्य श्वो वा पवनपृतना चन्दनगिरे
र्वामं कामस्य स्फुरति च शुभाशंसि नयनम् ॥ ९६ ॥

अर्धाम्भोभिर्वरुणनगरीवासिना वासरेन्द्रे
पादोष्माणं शमयति वियद्वर्त्मखेदोपनीतम् ।
सर्वर्तूनां व्यवसितिमिति श्रेयसीं वीक्ष्य साक्षा
त्सिद्धां मेने विबुधनिभुना भाविनीं कार्यसिद्धिम् ॥ ९७ ॥

इति गुर्जरेश्वरपुरोहितश्रीसोमेश्वरविरचिते सुरथोत्सवनाम्नि महाकाव्ये
ऋतुवर्णनो नाम पञ्चमः सर्गः ।

---

षष्ठः सर्गः ।

कुङ्कुमाविलमिवाचली जगत् कुर्वदर्जितदिपितमनेतसः ।
अस्तशैलशिखरे गरघुतेर्दिद्युते घमलकोमलं महः ॥ १ ॥

पद्मराग इव सान्द्रविद्रुमश्रीदसोदग्मगीचिमण्डलः ।
मण्डरोचिरनकाससयलमं गैरिकस्फटकमस्तभूभृत ॥ २ ॥

उज्झती शुचिनि वाप्यविर्ज्झर ध्वान्तदन्तिनिभिसाङ्कुरे ।
नम्रयाम्बुदयिना दश ददौ रागिणि प्रियतमे च पृष्णि च ॥ ३ ॥

वासरम्बुपरमे शनैः शनैः मकुलन्कपन्नागमनयम् ।
रक्तचन्दनरसारुणं रवेर्बिम्बमम्बुनिधिर्व्यरा नत ॥ ४ ॥

शर्वरीविरहिणां पतत्रिणां पुण्यराशिरिव वासरः शनैः।
भास्वता सह ततान तानवं मित्रतुल्यगतयो हि निर्मलाः॥ ५॥
एहि गेहिनि विधेहि मङ्गलं भानुमानयमुदेति नः प्रभुः।
एवमाकुलतया प्रलापिनं वीक्ष्य चक्रमरुदद्वदङ्गना॥ ६॥
पूष्णि कोष्णमहसि प्रपेदिरे पादपप्रतिवपूंपि विष्ण(ष्टु)वम्।
नीचवृत्तिरुपचीयते परं हा महीयसि विपद्वशं गते॥ ७॥
गौरवं गिरिषु केषु नास्ति तत्केवलं सफलमस्तभूभृतः।
यो ददाति दिवसात्यये पदं भास्करस्य तिमिरोत्करस्य च॥ ८॥
नैव यावदवनीरुहोच्चयच्छायमायतमगच्छदेकताम्।
होमहेतुरिह गार्हपत्यतस्तावदग्निरुदहारि साग्निकैः॥ ९॥
अश्रितश्रि विरहय्य वारिजं षट्पदः कुमुदमुन्मदं ययौ।
तेऽन्य एव सुहृदः सदान्तिकं न त्यजन्ति विभवात्ययेऽपि ये॥ १०॥
संश्रितस्य शिशिरेतरत्विषः पश्चिमामथ दिशं दशामिव।
मन्दिमानमसमानमीयुषी पादसंततिरवाप शीतताम्॥ ११॥
रेजुरर्ककिरणैर्जपारुणैः पिञ्जरा विरहिणः पतत्रिणः।
निर्दयस्मरशिलीमुखार्दनादुच्छलद्बहलशोणिता इव॥ १२॥
खातपतन्तमपरे खगाः खगं वीक्ष्य बद्धमिव पाशपाणिना।
व्याकुलाः प्रतिदिशं विचुक्रुशुः कः सजातिविपदा न दूयते॥ १३॥
सुभ्रुवः समयमायतीमवं वीक्ष्य वल्लभसमागमोत्सुकाः।
निर्मलस्मरशराधिदैवतान्यञ्जनेन नयनान्यसञ्जयन्॥ १४॥
वत्सकौतुकतया गुरूधसां दुर्वहत्वमवधीर्य धेनवः।
द्राक्कुटीर्विविशुरिष्टसंगमान्न श्रमेण विरमन्ति वत्सलाः॥ १५॥
कामिनीभिरिव मेदिनीधरश्रेणिभिर्गुरुपयोधरान्ततः।
हीयमानतपनातपच्छलात्पीतकञ्चुक इवोदमुच्यत॥ १६॥
व्योम वीक्ष्य गलदर्कमण्डलं ध्वान्तगन्धि च वसुंधरातलम्।
आश्रयन्तविषयः सदाश्रयं विश्रमाय तरुप(स)ण्डमण्डजाः॥ १७॥

---

१. पक्षिणः. २. पूर्वम्. ३. सान्धकारम्.

पश्चिमाचलमहेमकुम्भतां भास्करे भजति शोणशोचिषि ।
गह्वरेषु विजहार मारजित्कण्ठकुण्ठनकृतोद्यमं तमः ॥ १८ ॥
याति याति पुनरस्ति चास्ति चेत्याकुलैरथ रथाङ्गनामभिः ।
वीक्ष्यमाणमनवेक्ष्यतामगाद्बिम्बमम्बरमणेः शनैः शनैः ॥ १९ ॥
सांप्रतं गतवसोरसांप्रतं वस्तुमत्र मम वस्तु दर्शितः ।
चिन्तयंश्चिरमितीव दुर्मना देशमन्यमगमद्गभस्तिमान् ॥ २० ॥
रागवन्तमपि हन्त वारुणी दिग्विहाय तिलकं विहायसः ।
चुम्बति स्म वलिनं तमश्चयं निर्विवेकहृदया हि योषितः ॥ २१ ॥
तत्वमान्तरमिवावलोकितुं मीलिताम्बुजविलोचना मनाक् ।
धातुचूर्णरुचिराम्बराः परिव्राजका इव चकासिरे दिशः ॥ २२ ॥
एकतोऽवतमसैर्मलीमसं रज्यमानमपरत्र संध्यया ।
पाकपाटलितकृष्णलाफलप्रेक्षणीयमभवन्नभः क्षणम् ॥ २३ ॥
उच्चैश्चरमभूमिभृत्तटाद्गोपतौ पतति वार्धिमध्यतः ।
उच्छलद्भिरिव शीकरैस्ततस्तारकैरलमकारि पुष्करम् ॥ २४ ॥
किं महीधरमहागुहागृहाद्भूरुहां किमुत कोटरोदरात् ।
उज्जगाम जगतीतलादथ क्रुद्धकोलकुलकश्मलं तमः ॥ २५ ॥
नित्यमुष्ल(ष्ण)महसा निरस्यते नित्यमन्धतमसं च धावति ।
आदिमस्य परमं किमुद्यमं निस्त्रपत्वमितरस्य वा स्तुमः ॥ २६ ॥
रेजिरे प्रतिनिकेतनाजिरं दीपकाः फणिपुटामणिस्फुटाः ।
बाधितुं तिमिरमीरिता यता भास्करेण किरणाङ्कुरा इव ॥ २७ ॥
अस्तमीयुषि दिनाधिनायके ध्वान्ततस्करतिरस्क्रियाकुलम् ।
रक्षितं जगदराजकं जवाद्वह्निना विधृततीव्रहेतिना ॥ २८ ॥
अच्छधूमसममादितस्ततो नीलनीरदसमाजमांसलम् ।
दिग्वधूनिचिरीशमम्बरे डम्बरेण तदनुस्थितं तमः ॥ २९ ॥
अन्तरेण तरणिं विभावयन्भाविनीमिह महोमहर्घताम् ।
दीपकप्रकरकैतवेन ततसंमहं प्रतिगृहं व्यधाज्जनः ॥ ३० ॥

यैर्निधाय निजकन्दरोदरे रक्षितं क्षितिधरैरहस्करात् ।
तांस्तमस्तिरयति स्म सस्मयं न ह्यसत्त्वुपकृतेन गृह्यते ॥ ३१ ॥
भूरलिप्यत रसैरिवायसैर्वायसैरिव निरन्तरा दिशः ।
सिंहिकासुतशतैरिवावृतं व्योम वल्गति तमिस्रमण्डले ॥ ३२ ॥
दीपकेपु दलितालिकालिकैर्नूनमन्धतमसैः कृतान्धता ।
तेन तेऽपि भवनेपु बम्भ्रमुर्गेहिनीकरतलावलम्बिनः ॥ ३३ ॥
मागधा इव दिवान्धपक्षिणस्तत्क्षणप्रकटितैः पटुस्वनैः ।
धुन्वतोऽन्धतमसस्य भूतलं तन्वतेऽस्य जयघोषणामिव ॥ ३४ ॥
दुस्तरे तमसि पुस्फुरे परं वायसारिभिरिवाभिसारिभिः ।
उद्गतिर्जगति जिह्मकर्मणां जायते न मलिनाश्रयं विना ॥ ३५ ॥
नीलशैलसमसंमिलत्तमस्काण्डकाण्डपटसंवृते पथि ।
कापि कामुकमियाय पुंश्चली निश्चलीकृतविराविनूपुरा ॥ ३६ ॥
अन्धकारनिकरेऽपि भीपणे वल्लभानभिसरन्नसाध्वसः ।
भीरुरित्यभजत क्षतान्वयं नाम तामरसलोचनाजनः ॥ ३७ ॥
भिल्लतुल्यरुचिभिस्तमश्चयैः संचरद्भिरपविन्त्रितां दिवम् ।
प्रोक्षति स्म हिमदीधितिर्महःसीकरैस्तगरकोरकोत्करैः ॥ ३८ ॥
केवला गवलसंनिभे नभस्युद्यती सितमरीचिदीधितिः ।
राजति स्म सुरराजकाष्ठया केशपद्धतिरिव प्रसाधिता ॥ ३९ ॥
पूर्वपर्वततिरोहितात्मनः शर्वरीशितुरभीषुभिर्बभे ।
पश्चिमं वय इवेयुपस्तम.पेटकस्य पलिताङ्कुरैरिव ॥ ४० ॥
केतकीवनसमानधामनि व्योम्नि तन्नवपलाशपेशला ।
शर्वरीवरयितुर्व्यरोचत स्वैरिणीनिवहवैरिणी रुचिः ॥ ४१ ॥
दत्तदेक्षतनयागणक्षणं तत्क्षणं कुवलयेक्षणाजनः ।
रोहिणीरमणखण्डमण्डनं नीललोहितमपश्यदम्बरम् ॥ ४२ ॥
खण्डमण्डलमखण्डरोचिपः किंचिदुच्छलितलाञ्छनच्छवि ।
रोचते स्म रचिताञ्जनासरं जैत्रपत्रमिव पुष्पपत्रिणः ॥ ४३ ॥

१. तारकाः, गती च.

अम्बरे नवनिशाधिपोदयात्पोतकीदयितपिच्छसच्छवौ ।
कांदिशीकतिमिरेण वर्त्मना सत्वरं व्यचरदित्वरीजनः ॥ ४४ ॥
रत्नरुक्मकनककान्ति गर्भिणीगण्डपाण्डु रजतोज्ज्वलं क्रमात् ।
भित्तमर्धमसमग्रमक्षतं लक्ष्यते स्म वपुरेणलक्ष्मणः ॥ ४५ ॥
मुख्यमायुधमनन्यजन्मनो जन्मनः फलमखण्डितं दृशाम् ।
सागरस्य परमं रसायनं सोममण्डलममण्डयन्नभः ॥ ४६ ॥
कोमलैः कुमुदबान्धवः करैरन्धकारनिकरम्बमुद्धरन् ।
तद्भरेण गुरुणारुणच्छविर्मन्दमन्दमुदगादसंशयम् ॥ ४७ ॥
वल्लभे रजनिवल्लभे तमःस्तोममंशुकमिवाशु कर्षति ।
शर्वरीवनितया विवर्णया स्विन्नमिन्दुदृषदम्बुदम्भतः ॥ ४८ ॥
पूरयन्मकरकेतुदौर्हृदं सौहृदं च कुमुदेषु दर्शयन् ।
उल्ललास कलितक्रमस्तमस्काण्डखण्डनमतान्तरं शशी ॥ ४९ ॥
दिङ्मुखेषु ददती सितश्रियं पुष्णती तरुषु पुष्पसंपदम् ।
इन्दुदीधितिरदर्शयद्भुवि क्षीरनीरधितरङ्गसंगतिम् ॥ ५० ॥
मारमीश्वरललाटलोचनप्लुष्टमङ्कगतमङ्कदम्भतः ।
जीवयन्निव विधुः सुधारसैराविरास तमसामसज्जनः ॥ ५१ ॥
यामिनीयुवतिहारयष्टिभिर्भ्राभरैर्मकरकेतुभूपतेः ।
ऐन्दवैरलिकदम्बकदमलं रश्मिभिर्नभसि भस्तितं तमः ॥ ५२ ॥
अग्रपादपरिघट्टितैस्तमःकर्दमैरिव कलङ्किताकृतिः ।
अन्तरिक्षविपिनान्तरेऽचरत्तारकासुरभिशावरः शशी ॥ ५३ ॥
ताडयंस्तिमिरमंशुयष्टिभिर्विष्टपं च पुरतः प्रदर्शयन् ।
मीनकेतनमहीपतेः प्रतीहारतामनुजहार चन्द्रमाः ॥ ५४ ॥
उत्सवेन सह वाहिनीपतेर्वैशसेन तमसः श्रिया निशः ।
संभेदन कुमुदस्य चात्मना पद्मः सितमरीचिरच्यत ॥ ५५ ॥
रश्मिषु प्रवितेतेषु पाशवत्पश्यता शशिपुरस्सरं मृगम् ।
अप्यनीनहरिणान्प्रतिशता मन्मथेन मृगया विनिर्ममे ॥ ५६ ॥

---

१. [illegible]

दुग्धबिन्दुधवलैः सुधारुचः सौधजालगलितैरभीपुभिः ।
रेजिरेऽजिरविलासभूमयो मौक्तिकप्रकरदन्तुरा इव ॥ ५७ ॥
आतपेन कटुना कटुत्विषः स्फीतपित्तपरितप्तलोचनैः ।
स्वक्षितेक्षुलतिकेव चन्द्रिका चर्व्यते स्म मधुरा चकोरकैः ॥ ५८ ॥
दन्तिदन्तमुसलेषु मांसलं राजहंसनिवहेष्वहंकृतम् ।
दुर्धरं दधति सौधपद्धतावुद्धतं व्यहरदैन्दवं महः ॥ ५९ ॥
अभ्युपेक्ष्य निजलक्ष्मकालिकामिन्दुना धवलितं धरातलम् ।
मन्यते नहि महान्तमुत्तमाः स्वापकारमपरोपकारतः ॥ ६० ॥
उर्वरा परिचितेव पारदैः शारदैरिव घनैर्घनं नभः ।
आचरत्यपरवर्णनिह्नवं जाह्नवीसदृशि चन्द्रिकाद्रवे ॥ ६१ ॥
सर्वतोऽपि हरपर्वतोज्ज्वले शुद्धिमादधति चन्द्रिकाजले ।
शुभ्रवेषविभवा बभुः स्त्रियो दुग्धसिन्धुजलदेवता इव ॥ ६२ ॥
कौमुदीकुमुदवृन्दसुन्दरां शर्वरीमथ विलोक्य सत्वरः ।
काकतुण्डमृगनाभिचन्दनैर्मण्डनानि विदधे वधूजनः ॥ ६३ ॥
हारदाम हृदि दन्तपत्रिका कर्णयोर्वपुषि चन्दनद्रवः ।
केशपाशमभिफुल्लमल्लिका सुभ्रुवामभवदिन्दुदीधितिः ॥ ६४ ॥
विद्रुमादपि निसर्गसुन्दरे दन्तवाससि विशालचक्षुषः ।
मण्डनैकरसया वयस्यया या च कः स्थितिरिति न्यधीयत ॥ ६५ ॥
आगते सभिकतां सितद्युतौ द्यूतकारिभिरिवातिजित्वरैः ।
अक्षनिर्जितवतंसवारिजश्रीरगृह्यत नितम्बिनीमुखैः ॥ ६६ ॥
प्रेयसः प्रविशतो हृदालयं मङ्गलाय किल काचिदङ्गना ।
तोरणस्रजमिवाकरोत्कुचस्तम्भयोरुपरि हारवल्लरीम् ॥ ६७ ॥
शोभते स्म मृगनाभिनिर्मिता सुभ्रुवामभिनवा ललाटिका ।
चूर्णकुन्तलकलापकालिका भ्रूलतांशुभिरिवैकतां गता ॥ ६८ ॥
मण्डनाय विदधे वधूदृशां साधु कज्जलरजः पयोजभूः ।
वर्तते श्रुतिपथं विलङ्घ्य यः कालिमैव किल तस्य युज्यते ॥ ६७ ॥

१. अगरु'. २. नेत्राणि, पाशकाश्च

मूलबद्धकुसुमा मृगीदृशां वेणिरेणमदरेणुरूषिता ।
राजति स्म रजतान्विततसरुः खड्गयष्टिरिव पुष्पधन्वनः ॥ ७० ॥
कामिनीकचकलापकालिमा ज्योत्स्नयापि न तयापचायितः ।
संसृजन्ति सुमनोभिरन्वहं ये श्रिया विरहिता न जातु ते ॥ ७१ ॥
काञ्चनाभरणरोचिरङ्कुरैराचितं रचितचम्पकस्रजैः ।
चन्दनार्चितमपि व्यभाद्वपुः कुङ्कुमाक्तमिव कुञ्चितभ्रुवाम् ॥ ७२ ॥
यत्स्वभावसुभगं वधूवपुस्तद्विभूषणविभूतिभूषितम् ।
कामिनां स्मरशरक्षते हृदि क्षारभारमकिरत्तरामिव ॥ ७३ ॥
यत्र शुभ्रमहसापसारितं गर्भगेहतिमिरं मरीचिभिः ।
तद्वधूवदनदीप्तिदुःस्थितं धूपधूममिषतो गतं बहिः ॥ ७४ ॥
पीडितं हृदि रतीशरक्षसा वीक्ष्य लक्ष्मणमिवाङ्गनागणम् ।
आनिनाय वरमौषधं जवादाञ्जनेय इव दूतिकाजनः ॥ ७५ ॥
कामिनीनयनयोर्विलोलयोर्लोलुपेन मनसा नियुक्तयोः ।
वल्लभागमनमार्गमार्गणे विस्मृतेव सहजानवस्थितिः ॥ ७६ ॥
कामुकागमविकासिकामिनीगण्डमण्डलविशेषितश्रिया ।
शर्वरीवरकलङ्ककालिकानिर्मदा मृगमदेन निर्ममे ॥ ७७ ॥
पत्युपासनमनिष्टशान्तये योषितामिति यथार्थं वचः ।
पश्य पश्य विरहे दहत्यसावङ्गभूरपि यदङ्गकानि मे ॥ ७८ ॥
तत्र तेन सह विग्रहं सहे याहि तत्र तमिहानय द्रुतम् ।
काचिदेवमुपदिश्य दूतिकां प्राहिणोत्प्र(त्र)णयिने मनस्विनी ॥ ७९ ॥
(युग्मम्)

यां न गानभृतमालयोऽप्यलं नेतुमप्रियकरं प्रियं प्रति ।
तां सहेलमनयन्निशाकरो दुष्करं किमथवा कलावताम् ॥ ८० ॥
प्रेम[1]मानशबलं विशिष्यते सोपदंशमिव कापिशायनम् ।
तत्कदापि दयिताय कुप्यतां नार्जयेत्कमुल्लाः(माः) सखिप्रियाः ॥ ८१ ॥

१. मानलम्.

काचिदित्यनृजुतां सखीजनैः शिक्षितापि दयितेऽभिवर्तिनि ।
तां निराकृत कृताङ्गवेपथुर्न स्मरः परवशः प्रवर्तते ॥ ८२ ॥

(युग्मम्)

वीक्षितोऽस्मि पतितोऽपि पादयोर्नैतयेति भव मावमानितः ।
नापराधपरितापितं जवादेति शान्तिमनुरागवन्मनः ॥ ८३ ॥
सापि सानुशयमानसा जवात्त्वां व्रजन्तमनुजग्मुषी परम् ।
श्रेणिभारपरिमन्दगामिनी संगता न भवता त्वरावता ॥ ८४ ॥
सा मृदुर्मदनबाणबाधिता बाध्यते च विधुनाधुनाधिकम् ।
तत्पुरंध्रिवधपातकाङ्क्ष्यं चेत्तवास्ति तदुपेहि पाहि ताम् ॥ ८५ ॥
प्रेयसि प्रहितया वयस्यया कश्चिदित्यभिहितः कृती युवा ।
तामुपेत्य रभसादुपोषितः पारणामधरसीधुना व्यधात् ॥ ८६ ॥

(कुलकम्)

नाथ वेद्मि विरहव्यथामतस्त्वां वदामि दयितां व्रजाशु ताम् ।
कुर्वतीं सुकृतमेतदेति यन्नार्तिरन्यजननेऽपि मामियम् ॥ ८७ ॥
कोऽपि कन्दलितमन्तु दुःखितः प्रेयसीमिति गभीरभाषिणीम् ।
आनमन्नथ तदश्रुनिर्झरस्नानधौतदुरितो मतोऽभवत् ॥ ८८ ॥

(युग्मम्)

आगतेष्वभिमतेष्वथाङ्गनास्तैवङ्गदङ्गदमणिद्युतां गणैः ।
रञ्जयन्त्य इव रागिणोऽप्यमूनारभन्त रसनं परिश्रु(सु)तः ॥ ८९ ॥
बिम्बितादमृतदीधितिबिम्बतः पङ्कजादपि निजाङ्कवर्तिनः ।
मानिनीमुखमधिश्रि सीधुना जानतेव चषकान्निषेवितम् ॥ ९० ॥
चातुरीं वचसि विभ्रमं दृशोर्मानसे मनसिजं च पुष्यति ।
हृष्यते स्म दयिते विचक्षणे स्त्रीगणेन न तु कापिशायने ॥ ९१ ॥
भ्रूशरासनमनोहरः पुरः पृष्ठतः कचकलापमुद्वहन् ।
मेदिवान्मदनमेदिनीपतेर्वीरवर्ग इव वाणिनीगणः ॥ ९२ ॥

---

१. 'मि' ख. २. व्यवहार्य. ३. चलत्केयूरमणिकान्तीनाम्.

उत्थिते रतरणार्थिनि प्रिये स्त्रीनितम्बसुभटैर्मदोद्धतैः ।
सिंहनाद इव संभ्रमस्खलन्मेखलाकलकलच्छलात्कृतः ॥ ९३ ॥
वारितोऽपि करवारिजव्रजैः सीधुगन्धि मुखमिन्दुमुखीनाम् ।
षट्पदः सपदि पातुमपप्तद्दुर्लभे हि रतिरेत्यतिरेकम् ॥ ९४ ॥
व्रीडनम्रमविदग्धवधूनामास्यमुन्नमयता मधुरौघम् ।
आसवेन समयोचितकर्त्रा कामिनो मुमुदिरे सुहृदेव ॥ ९५ ॥
दीक्षितैरपि सदासवसेवाकोविदैर्युवभिरिष्टविलासैः ।
वल्लभाधरसुधारसपानात्स्वर्गजं सुखमिहैव गृहीतम् ॥ ९६ ॥
पूर्वकायमवधूतवतीनां कुण्डलैर्विगलितं वनितानाम् ।
नूपुरैर्मदभृतामवतस्थे कः सदाचरणवान्पततीह ॥ ९७ ॥
तापसाधनमसाध्यतया यं नौषधीपतिरपि प्रतिचक्रे ।
तं महान्तमपि मानवतीनां रोषरोगमरुजन्मधुवारः ॥ ९८ ॥
आलवाल इव बालमृगाक्षीमानसे मधुरसैरभिषिक्तः ।
उल्ललास ललितस्मितपुष्पः पुष्पचापशिखरी शतशाखः ॥ ९९ ॥
कामिनीषु नयनेन तिरश्चा व्यञ्जतीषु सुजनाय मनः स्वम् ।
उत्थितः कृतमिथः करसंज्ञं कार्यवानिव सुहृत्परिवारः ॥ १०० ॥
पाणिना स्पृशति सागसि नाथे मन्थरं न रचितप्रसरं च ।
ताम्यति स्म हृदयं प्रमदानां मानमानसभुवोरविभक्तम् ॥ १०१ ॥
कर्षति प्रसभमंशुकमीशस्तद्वधूरपि रुणद्धि सलज्जा ।
दीपकेन शलभोपनिपाताद्यस्यता विनुनुदे सविनोदः ॥ १०२ ॥
वल्लभे दशति न प्रमदाभिर्मीलितार्धनयनाभिरबोधि ।
निर्दयोऽपि रदनामविभेदश्चेतना क ननु लब्धभुजङ्गे ॥ १०३ ॥
म्पर्शितं सहचरेण रतार्तो लज्जयेव युवतेः कुचयुग्मम् ।
गृम्यतां पुलकतां दधदासीन्मुक्तमौक्तिकलतोज्ज्वलकीर्ति ॥ १०४ ॥
विभ्रमभ्रुजलता रतरङ्गे रङ्गदङ्गजगजान्दु(?)निनादैः ।
का च काचवदयावलिशब्दैराजुहाव हृदयं दयितानाम् ॥ १०५ ॥

---

१. 'कर्षितः' ख. २. 'कम' क. ३. ताम्यन्ति.

संप्रयोगरभसात्पतताधः कामिनीकनककान्तिगुणेन ।
क्रन्द्यते स किल किङ्किणिकाभिः कः कलत्रविरहे नहि दुःखी ॥१०६॥
निर्गते परिजने जघनेभ्यः प्रस्खितेषु वसनेषु वधूनाम् ।
मन्मथप्रथमकेलिजडानां लज्जितेव निरगादपि लज्जा ॥ १०७ ॥
अश्रितोद्धतरतोत्सवखेदस्वेदबिन्दुविगलत्तिलकानि ।
रेजुरेव वदनानि वधूनां शोभते हि मृदितोऽपि कृतार्थः ॥ १०८ ॥
पल्लवैरिव नवैर्नखचिह्नैः सुभ्रुवां शुशुभिरे कुचकुम्भाः ।
यैर्बभूव भुवनत्रयजेतुर्मङ्गलं मनसिजक्षितिभर्तुः ॥ १०९ ॥
निर्विचारमधरोत्तरवर्ति व्याहतानुचरनायकभावम् ।
सोपचारमपि रागिजनेन न्याय्यमेव रतराज्यमकारि ॥ ११० ॥
एणाक्षीणां कान्तदन्तक्षतालंकारादोषाघावकैः साधु यातम् ।
स्वस्थानेऽन्यं वीक्ष्य वैद्धप्रतिष्ठं कस्तत्रैव स्थातुमीहेत रागी ॥ १११ ॥

संभोगप्रसरनिरस्तभूषणानां
कान्तानां कुचकलशद्वये विहारे ।
नेत्रालीमसकलमीलितां दधानैः
सिद्धार्थैः पतिभिरिव स्थितिः प्रपेदे ॥ ११२ ॥

अथ क्रीडागारे चिरविरतधारापतरुते
रतान्तक्रान्तामिर्दयितहृदि सुप्तं युवतिभिः ।
वशे विश्वं कृत्वा रतिसहचरोऽपीश्वरशम-
प्रमाथप्रख्यातं समहरत पौष्पं प्रहरणम् ॥ ११३ ॥

अभजत नभःपश्चाद्भागं विधुर्विधुरच्छवि-
र्हरिहयहरित्याविः किंचिद्बभूव दिवाञ्चलः ।
कुवलयवनादुत्तिष्ठासुर्थियासुरथापरं
सरसिजवनं श्रीर्मङ्गल्यं मुहूर्तमपैक्षत ॥ ११४ ॥

इति गुर्जरेश्वरपुरोहितश्रीसोमेश्वरदेवविरचिते सुरथोत्सवनाम्नि महाकाव्ये
चन्द्रोदयवर्णनो नाम षष्ठ: सर्गः ।

१. अविश्रान्त. २. 'सापि' क. ३. 'ल' ख. ४. रक्तवर्णः, मत्सरी च. ५. सुखेन, ध्यानेन च. ६. 'रवरिश-' ख.

सप्तमः सर्गः ।

पूर्वानले च मिथुनानि रथाङ्गनाम्ना-
मानन्दयंश्च तिमिरं परिमन्दयंश्च ।
प्राभाकरः सरसयावकरक्तकान्ता-
दन्तच्छदच्छविररोचत रोचिरोघः ॥ १ ॥

माध्वीकपानजमिवारुणजं दधाना
रागं मुखे गलिततारकहारयष्टिः ।
अश्यत्तमिस्रवसना हरिदिक्पुरंध्री
तत्याज माल्यमिव चन्द्रमरीचिजालम् ॥ २ ॥

आविर्भवद्दशशतद्युतिपत्रपूरे
तद्वारितोदयधराधरधातुवर्णे ।
प्राचीमुखे परिणतारुणि ताम्रताम्र-
ताम्बूलसंभव इव स्फुरति स्म रागः ॥ ३ ॥

हन्तुं पुरः स्फुरति चण्डरुचौ प्रभात-
रागच्छलेन कलयत्करवीरमालाम् ।
वध्यस्थलीमिव दिवं स्फुटतारकास्थि-
कूटां तमःपटलमानयति स्म कालः ॥ ४ ॥

ध्वान्ते समुन्मिषति मेचकरोचिरासी-
त्पीयूषरोचिषि चकोरचिरंबभूव ।
दीप्तद्युतावरणिमानमगच्छदुर्वी
सर्वोऽपि हि व्यवहरत्युदितानुरूपम् ॥ ५ ॥

आकर्ण्य कुक्कुटरुतानि रतैकसख्या
रात्रेः प्रयाणपटहत्वमुपेहि(यि)वांसि ।
प्रक(ह)प्रियप्रणयजर्जरितानि मान-
विच्छर्दितानि परितस(स्य)जुरङ्गनेत्राः ॥ ६ ॥

---

१ वाइलमयूखे, मानवर्ण्यन्दनयुके च.

रङ्गत्तुरङ्गखुरखण्डितशक्रशैल-
श्रृङ्गोत्थगैरिकपरागरुचारुणेन ।
देवेऽरविन्दविधुरोद्धरणैकबन्धौ
बुद्धिस्थ एव विदधे तिमिरस्य लोपः ॥ ७ ॥

विध्वस्तदर्शननिमीलनकृत्तमिस्र-
मुत्सेधिताधिकरतद्युतिचित्रभानुम् ।
रात्रेर्दिनस्य च विकाशितकौशिकाश-
मालोकते स समयं सममेव लोकः ॥ ८ ॥

दृष्ट्वा रथाङ्गमिथुनं गृहदीर्घिकायां
संगच्छमानमनुभूतरसापि काचित् ।
कन्दर्पकेलिषु पुनर्नवतां गतेव
नापृच्छमान(?)मपि कामिनमन्वमंस्त ॥ ९ ॥

उन्मीलदम्बुजविलोचनलोल(भ)नीयं
भास्वद्द्युतिव्यतिकराधरितेन्दुकान्ति ।
कान्तामुखं दिनमुखं च विलोक्य यातुं
स्थातुं च कश्चन शशाक न कामलोलः ॥ १० ॥

प्रातस्तनेन नवपङ्कजपुञ्जगन्ध-
संबन्धबन्धुरतरेण समीरणेन ।
रत्यै रतिश्रमनमन्नयनोऽप्युपाजे-
कृत्य प्रकारमुददीप्यत कामिलोकः ॥ ११ ॥

नेत्राञ्जनं विलुलितं दलिता कपोल-
पत्रावलिर्विधुरिताधररागमुद्रा ।
सुप्तं घनस्तनतटे च गृहीतकण्ठै-
र्बाष्पाम्बुभिः प्रियतमैरिव खण्डितानाम् ॥ १२ ॥

---

१ विनाशिता नेत्रनिद्राङ्कद्रान्निर्येन, पक्षे विधुना चन्द्रेण अस्त प्रकाशसंकोचकृत्तमो यत्र. रविम्, वह्निं च  ३ इन्द्रदिक्, उलूकवाञ्छा च  ४ दुर्बल बलिन कृत्वा

अन्तर्वहन्मलिनतां तमसा बहिस्तु
  रागं श्रयन्किशलयैररुणांशुमिश्रैः ।
पक्षिस्वनैः खलु इवाचलवृक्षखण्ड-
  श्चण्डद्युतेरुदयतः स्तुतिमाततान ॥ १३ ॥

ज्योत्स्नाजलेन शनकैः शममृच्छतेव
  प्रत्यग्रकर्दमसमच्छवि जायमानम् ।
कान्तैकदेशमहरीशितुरग्रपादै-
  र्व्योमार्द्रभूतलमिवोज्ज्वलतां प्रपेदे ॥ १४ ॥

विस(श्र)स्तहस्तमपटुश्रवणं विशीर्ण-
  तारं तथा शिथिलकृत्तिकमस्तशुक्रम् ।
श्यामोपलो(भो)गविमुखं भजति स भाव(स्व)-
  त्युद्गच्छति स्थविरभावमिवान्तरिक्षम् ॥ १५ ॥

त्रिः पाणिना परिसमूह्य सहोदकेन
  देवं दधद्भिरधिमानसमिध्यमानम् ।
आत्तं चतुर्हविरधिश्रयणेन पूत-
  मभ्याहितैर्हुतवहे जुहवांबभूवे ॥ १६ ॥

पीनस्तनेषु हृदयेषु मनस्विनीनां
  माति स चन्दनरजो रजतावदातम् ।
उद्दामकामघुणजर्जरपञ्जरास्थि-
  निर्यत्य(त्प)रागकणिकाकरणिं दधानम् ॥ १७ ॥

भिन्नाञ्जनाश्रुजलयोगगलत्कपोल-
  कस्तूरिकालवभवल्लिपिलाञ्छनानि ।
आवेदयन्नुपसि पुष्पशरोपनीतं
  दुःखं सखीषु शयनानि मनस्विनीनाम् ॥ १८ ॥

---

१. ध्वान्तेन, पापेन च. २. रवेः. ३. यथा कस्यचित्पादाग्रेण पीडितं नदीतटादार्द्रं भूतलमुज्ज्वलं भवति तथा सूर्यपादाक्रान्तनभोऽपि. ४. गृहीतम्.

पिङ्गाभिरुद्यदहिमांशुमहश्छटाभिः
शोभां जटाभिरिव दर्शयदन्तरिक्षम् ।
बिभ्रन्निरस्तरुचि चन्द्रमिषात्कपालं
कापालिकस्य करणिं कलयांचकार ॥ १९ ॥

कल्पान्तविप्लुतपयोदघटातिघोरा-
कारान्धकारमहिषासुरहानिहर्षात् ।
देवर्षिभिर्विकसितास्यमुपास्यमाना
चण्डीव चण्डकिरणस्य रुचिश्चकासे ॥ २० ॥

तीव्रैः शरैरिव करैः किरणाकरेण
मत्वात्मजानि तिमिराणि तिरस्कृतानि ।
अस्तोकशोकविकलेव कलङ्कदम्भा-
दङ्के पपात रजनी रजनीश्वरस्य ॥ २१ ॥

व्यापारयत्यथ करांस्तुहिनेतरांशा-
वाशाः सखीरिव सहासमुखीर्विलोक्य ।
न्यञ्चन्निशाकरनिभेन मुखं बभार
व्रीडाविनम्रमविदग्धवधूरिव द्यौः ॥ २२ ॥

पीत्वा तुषारकरपानकैरङ्कवर्ति
ज्योत्स्नाजलं सपदि पूर्वगिरेर्वनान्तात् ।
उच्चित्य तारककणान्गणशश्च कीर्णी-
स्तारापथे प्रथयति स्म गतं पतङ्गः ॥ २३ ॥

आलोकयन्नुदयमूर्धनि दीप्तिदृप्त-
मुत्तप्तपारशवपिण्डमिवोष्णपादम् ।
दाहाभिशङ्कित इव स्वकरान्सुधांशु-
राकुञ्चति स्म कुमुदावलिकेलिकारान् ॥ २४ ॥

---

१. सूर्येण २ 'व–' ख. ३. कर्पर. ४. 'ग' क. ५ 'क' क. ६. 'नि–' क. ७. 'सुमा' ख.

कान्ते सितत्विषि समीयुषि देशमन्यं
दीनां दशां कुवलयावलिरुद्वहन्ती ।
हासं जहौ मधुकरैः सह न व्यहार्षी-
न्नाप्यर्यमोदयमहोत्सवमालुलोके ॥ २५ ॥

लोकान्तरं रजनिकामिनि हन्त याते
म्लानिं भजत्सु सुजनेष्विव दीपकेषु ।
नीहारनीरकणकैतवतोऽश्रुपात-
मातन्वती रजनिरप्यनुगच्छति स्म ॥ २६ ॥

प्रत्यग्ररागसुभगस्य गभस्तिभर्तु-
रालिङ्गिताः करभरेण भृशं सरस्यः ।
निद्राणनीलनलिनच्छलमीलिताक्ष्यः
स्मेराणि वारिजमिषेण मुखानि दध्रुः ॥ २७ ॥

आतन्वता जगति दीप्तिमधर्पणीया-
माज्ञामिव द्युतिमताभिनवोदयेन ।
कारानुकारिकमलाकरकोशबन्धा-
दुन्मोचितः सपदि पुष्पलिहां समूहः ॥ २८ ॥

दीपाङ्कुरैर्भनिकरैस्तुहिनांशुना च
नाशोऽपि यस्य तिमिरस्य पराबभूवे ।
तेजस्विभिः सममशेषमपीदमेतै-
र्बालादपि द्युतिमतः क्वचनापि नष्टम् ॥ २९ ॥

बालेऽङ्कमापतति तिग्मकरे कराग्र-
व्याकीर्णकूर्चकचकश्पतमिश्रतन्तौ ।
शर्मोदयादिव निमीलिततारकस्य
तारापथस्य रुचिरा रुचिराविरासीत् ॥ ३० ॥

रक्षोधिराज्यमिव संतमसं सहस्र-
संख्यैः करैर्जगदसौख्यकरं निरस्य ।

उस्त्रानुरञ्जितजनद्विजराजपात-
हेतुर्व्यरोचत विकर्तनकार्तवीर्यः ॥ ३१ ॥

देशान्तरादशिशिरद्युतिमभ्युपेतं
कान्तं विचिन्त्य रुचिराम्बरधारिणीभिः ।
अभ्युद्धृतावतमसप्रसरालकानि
दिक्कामिनीभिरुपचस्करिरे मुखानि ॥ ३२ ॥

आलिङ्गितु कमलिनीमिव मार्ष्टुमर्स-
वारिच्छटामिव वियोगिविहङ्गमानाम् ।
आकाशनीरनिधिमध्यमिव प्रवेष्टुं
प्रासारयत्करसहस्रमहःसृङ्चैः ॥ ३३ ॥

प्रातः प्रणीततपनोपलकुण्डवह्निः
सोमं समग्रसुरपेयरसं निपीय ।
मूर्त्यन्तर भगवतः परमेश्वरस्य
यज्वेव गोव्रजमहर्पतिरुत्ससर्ज ॥ ३४ ॥

देवस्य दुर्ललितदैत्यनिकायकाय-
च्छेदोच्छलद्बहलशोणितशोणितस्य ।
गोमण्डलेन रचितानि किरातकान्ता-
केशच्छवीनि तिमिरोलपजालकानि ॥ ३५ ॥

दर्वीकरप्रकरमेचकमन्धकार-
मुच्छिन्दता कृतगतिर्विनतासुतेन ।
चक्रप्रियः कनकभङ्गनिभाम्बरश्रीः
पद्मोत्सवं प्रणमता हरिराततान ॥ ३६ ॥

---

१ किरणा, गावश्च २ चन्द्र, जमदग्निश्च ३ 'राज-' ख. ४ 'शु-' ख. ५ रवि ६ उद्धृत ७ चन्द्रम्, सोमवल्लीं च ८ यजमान इव ९ सूर्यस्य १० मन्देहा

आविष्कृतापगतदोषपदार्थसार्थं
पादैरिव प्रविततं महदैश्चतुर्भिः ।
सत्कान्ति काव्यमिव वासरमक्षतौज-
श्चक्रे रविः कविरिव प्रथितप्रबोधः ॥ ३७ ॥

वैलक्षुवं विमलधिष्ण्यमनिन्दिताशु
सोमाभिराममृपिमण्डलमण्डितं च ।
उज्जृम्भमाणमृगशीर्षमशीतदीप्ति-
र्दक्षाध्वरं हर इवाम्बरमन्वगच्छत् ॥ ३८ ॥

छायाच्छलेन महता धरणीधराणां
पृष्ठप्रदेशमवलम्ब्य निलीयमानः ।
अन्तर्दधे दुरवलोकमहो महोर्मि-
संवर्तितात्तिमिरराशिरशीतरश्मेः ॥ ३९ ॥

सिन्दूरसुन्दरमशोभत रश्मिजालं
जालागतं क्षितिभुजा भवनोदरेषु ।
अन्तर्निलीनतिमिरौघविघट्टनार्थ-
माग्नेयमस्त्रमिव मुक्तमहस्करेण ॥ ४० ॥

किंचिन्मृदुत्वमथ मुञ्चति चण्डरश्मौ
प्रालेयशैलदुहिता सहिता सखीभिः ।
पुष्पावचायकुतुकागणितोष्णपीडा
क्रीडावनाय जनकानुमता जगाम ॥ ४१ ॥

आमुक्तमौक्तिककणाभरणा सखीषु
क्षीराब्धिवीचिधवलं दधती दुकूलम् ।
ज्योत्स्नीव रात्रिषु नदीषु नभोनदीव
सा कामधेनुरिव धेनुषु राजति स्म ॥ ४२ ॥

मुक्तावली विलसति स्म हिमाद्रिपुत्र्याः
सौन्दर्यनिर्दलितकम्बुनि कण्ठपीठे ।

१ मुनिभेद, सुम्भेदध २ 'र्मि' ग.

आलिङ्गनैकरसिकस्य हरस्य बाहु-
दण्डद्वयादवसिता भसितच्छटेव ॥ ४३ ॥
पार्श्वद्वयप्रणयिनं परिचारिवर्गं
सा लीलया वलितकन्धरमालपन्ती ।
दूरादराजत मुदा कुमुदावदात-
दन्तद्युतिद्विगुणितोभयचामरश्रीः ॥ ४४ ॥
मन्दाकिनीमिव सितातपवारणेन
तच्छायया च यमुनामिव दर्शयन्ती ।
सा कस्य नाम न मुदामुदयं तदात-
दन्तर्गता जनयति स्म सरस्वतीव ॥ ४५ ॥
माकन्दकन्दलितकान्ति मधूकमेध्यं
पुन्नागदत्तपरभागमशोकशोभि ।
उत्फुल्लमल्लिकममीलितमालतीक-
मुत्कम्पचम्पकमसुद्रितपारिभद्रम् ॥ ४६ ॥
नीलातपत्रमवनेर्मकरध्वजस्य
विश्रामधाम मधुपां मकरन्दसत्रम् ।
विद्यामठं च कलकण्ठकुलस्य वल्ली-
वृन्दस्य लास्यसदनं वनमन्वगात्सा ॥ ४७ ॥

(युग्मम्)

रोमाञ्चकञ्चुकमथ प्रथयत्युदार-
मन्दारसौरभविभूतिहरे समीरे ।
तस्यास्तनौ स्तनभराधिगतश्रमाया-
मायासवारि विसरावसरो व्यरंसीत् ॥ ४८ ॥
संपाद्य पाद्यमिव पुष्परसैः क्षरद्भि-
राविष्कृतस्मितमिव व्रततिप्रसूनैः ।
लीलावनं वनजपत्रसगोत्रनेत्रां
तां स्वागतं पिकरवैरिव पर्यपृच्छत् ॥ ४९ ॥

देव्यास्तुषारकरशेखरवल्लभायाः
सौन्दर्यसंपदवलोकनविस्मितानाम् ।
अन्तर्निलीनमधुपस्मितपुष्पदम्भा-
न्नेत्रव्रजैर्विचकसे वनदेवतानाम् ॥ ९० ॥

साचीकृतैककुचकुम्भमुदञ्चदेक-
दोःकन्दलं शिखरिणामवकृष्य शाखाः ।
तत्राथ चैत्ररथचारुणि चक्रिरेऽस्याः
सख्याः प्रसूनकपरिग्रहमग्रहस्तैः ॥ ९१ ॥

जग्राह सा हसितपद्मरुचा करेण
स्तोकान्यशोककुसुमानि सपल्लवानि ।
पादेन तु प्रणुदती प्रचुराण्यकार्षी-
दादानमुन्नतधियां बहु दातुमेव ॥ ९२ ॥

मुक्त्वा मधूकमवधूय लवङ्गसङ्गं
संत्यज्य वारिजवनीमपनीय नीपम् ।
जातीमतीत्य तगरं विगणय्य भृङ्गै-
रङ्गीकृतं वदनसौरभमेव तस्याः ॥ ९३ ॥

यस्याः श्रवःसविधवर्ति कृतं भवान्याः
प्रच्छन्नलोचननिमीलनकौतुकेन ।
स्वं पाणिपङ्करुहयुग्ममथापराभि-
स्तेनैव सा स्फुटमन्यत सावतंसा ॥ ९४ ॥

तस्मिन्वनेऽभिनवलूनलताप्रसून-
गन्धानुधावदलिदीर्घितदृग्विलासा ।
चिक्रीड नीडजसमाजसमुत्थितेन
कोलाहलेन मुखरे शिखरीन्द्रपुत्री ॥ ९५ ॥

एवं विहृत्य वनसीम्नि सहाङ्गनाभिः
सा निम्ननाभिरवलम्बविलम्बहस्ता ।

१. 'लालिवि–' घ.

रङ्गत्तरङ्गकृतदुष्कृतसङ्गभङ्गां
गङ्गां जगाम जलकेलिकुतूहलेन ॥ ९६ ॥
तां वीक्ष्य वीक्षणहतांहसमापतन्तीं
डिण्डीरपिण्डमिषतः सितमुद्वहन्ती ।
उत्कूजतां कलकलेन जलाण्डजानां
भागीरथी सरभसेव मुदाबभासे ॥ ९७ ॥
नीरस्थितेन सितपत्रिकुले कलेन
फेनभ्रमं रुतशतेन परित्यजन्ती ।
निश्चिन्वती च सदृशाविपि पुण्डरीक-
खण्डं जले मधुकरैरुपरि भ्रमद्भिः ॥ ९८ ॥
रत्नाङ्गुलीयकविकस्वरकान्तिसान्द्रै-
रिन्द्रायुधं विदधती करजांशुजालैः ।
नानाप्रसूनपरिपूरितकेशपाश-
भारादिवांसयुगमानतमुद्वहन्ती ॥ ९९ ॥
प्रक्षालितः कलिमलो दलितार्थतृष्णा
सिक्तश्च पुण्यशिखरी शमितो भवाग्निः ।
येनाम्भसा हरशिरःशिशिरप्रभैक-
मित्रेण सा तदविशत्रिदशस्रवन्त्याः ॥ ६० ॥
(त्रिभिः कुलकम्)
गौरीमुखेन्दुमवलोक्य ममाम्बुजानि
मा संकुचन्तु सहसेति वितर्क्य गङ्गा ।
तोयैस्तदुच्चकुचघट्टनयोच्छलद्भि-
रन्तर्धये पटमिव प्रकटीचकार ॥ ६१ ॥
कर्पूरकुन्दकलिकाकलधौतशुभ्रै-
रभ्रापगाजलभरैर्गलितेऽङ्गरागे ।

१. दर्शननिरस्तपापाम्. २. 'तीर-' पा. ३. चन्द्र.

मूर्तिं विशेषविशदामवलोकयद्भि-
राळीगणैः क्षणमलक्ष्यत सापरेव ॥ ६२ ॥
गङ्गां विगाह्य चलिताचलचक्रवर्ति-
पुत्री गृहाय विगृहीतहरोपशान्तिः।
वृन्दारकैर्दितिसुतापहृतप्रमोदै-
रासाद्यते स्म तृषितैरिव तोयधारा ॥ ६३ ॥
म्लानैर्मुखैर्विकसितैश्च विलोचनाब्जै-
र्दुःखं सुखं च मरुतः समसुद्गिरन्तः।
(तस्याः प्रणम्य चरणौ शरणार्थिनस्ते
स्तोत्राय धातृतनयामनयन्मनांसि ॥ ६४ ॥
तापत्रयप्रशमनामृतवापिकायै
मोहान्धकारभरभर्त्सनदीपिकायै।
त्रैलोक्यलोचनचकोरकचन्द्रिकायै
तुभ्यं नमस्तुहिनपर्वतपुत्रिकायै ॥ ६५ ॥
विश्वत्रयं विदधतः कमलासनस्य
संरक्षतः क्षतशतक्रतुशात्रवस्य।
उच्छिन्दतः सितमरीचिभृतश्च शक्ति-
र्देवि त्वमेव सहकारितया स्थितासि ॥ ६६ ॥
पश्यन्नपि क्षणसुखान्विषयांस्तदर्थे-
मत्यर्थमन्ध इव धावति येन युक्तः।
मुक्तस्तु मुक्तिपदवीमयमेति लोक-
स्तत्कारणं किमपि हैमवति त्वमेव ॥ ६७ ॥
आक्रम्यते स्म महिषेण विषाणकोटी-
दत्तक्षताङ्कित वृषाभिभवेन या गौः।
तस्य त्वया सपदि दुर्ललितस्य दत्त्वा-
यादङ्क(?)ले पुनरसौ गमिता पतिं स्वम् ॥ ६८ ॥

१. एतत्कोष्ठान्तर्गतपाठः क-पुस्तके त्रुटितः.

अस्माकमापदमयं दमयन्मुदे त्व-
त्पादोऽस्तु···· कमलादपि कोमलस्य।
चक्रे क्षतिर्न च रणक्षतिदक्षिणेन
तेनापि धूर्जटिकुटुम्बिनि कण्टकेन ॥ ६९ ॥

शैलेन्द्रभूरपि भवस्य वनाभिरामा
कालीति गौर्यपि बुधैरभिधीयसे च।
हंसं मृगाधिपमथ कुरुषे शिवापि
दत्से सतामभिमतं फलमप्यपर्णा ॥ ७० ॥

लक्ष्मीः पुंसां प्रसरति भवत्पादपद्मप्रसादा-
देतत्पूजावच(?)नतिपरः स्वर्गिणां भर्गपत्नि।
त्वत्पादे तु प्रबलमहिषोन्मूलनादत्र दत्त-
श्रीकेली का न भवति नुतिः कोऽथवा स्तोतुमीशः ॥७१॥

यन्मौलौ सितमातपत्रमभितो यच्चारुणी चामरे
यद्वल्गन्ति गृहाङ्गणेषु गणशः शैलोन्नता दन्तिनः।
हारः शारदचन्द्रसुन्दररुचिर्यत्कण्ठपीठे लुठ-
त्येतत्ते चरणानते भगवति स्वल्पं फलं मन्महे ॥ ७२ ॥

यस्मान्नूनमनूनसाध्वसरसो देवस्त्रिशूलायुधः
कैलासाग्रमशिश्रयज्जलनिधेर्मध्यं च चक्रायुधः।
तेनास्तत्कमला बलादपहृता शुम्भेन शंभुप्रिये
तत्प्रत्यर्पय तां जगत्यभिमतं मातैव दत्ते यतः ॥ ७३ ॥

इत्याकर्ण्य गिरः सुरैरभिहिताः शीतांशुमौलिप्रिया
तत्कालोत्कलितप्रकोपकरुणागर्भं बभाषेऽथ तान्।
चिन्तां मुञ्चत पञ्चतामुपगतं जानीत दैत्यं च तं
कः सत्यां मयि मायिकोऽपि भवतामत्याहिताय प्रभुः ॥ ७४ ॥

दैत्यं दावमिव प्रतापिनमपह्नोतुं कृताङ्गीकृतेः
श्रुत्वा शब्दितमेवमद्रिदुहितुः पाथोदपङ्क्तेरिव।

देवैः संमदमुक्तलोचनपयःपूरैर्मयूरैरिव
श्रोत्रप्रीतिकिरः परं जयगिरः केका इव व्याकृताः ॥ ७१ ॥

इति श्रीगुर्जरेश्वरपुरोहितश्रीसोमेश्वरदेवविरचिते सुरथोत्सवनाम्नि महाकाव्ये देवीदर्शनो नाम सप्तमः सर्गः ।

अष्टमः सर्गः ।

अथ हैमवती हिमाद्रिशृङ्गे विलसन्तीन्दुकलेव शर्वमौली ।
विबुधारिवधेच्छया विशेषादतनोदात्मतनोर्मनोरमत्वम् ॥ १ ॥
जितचम्पकसंपदा तदङ्गद्युतिवृन्देन विसर्पता समन्तात् ।
शुशुभे किल शैलराजमूर्धन्युदयचन्द्रपवित्रमातपत्रम् ॥ २ ॥
मणिपङ्क्तिमिवोत्तमाङ्गसक्तामवदातद्युतिमिन्दुमौलिकान्ताम् ।
कलयन्नवनीमरं च विभ्रन्नगराजोऽनुजहार नागराजम् ॥ ३ ॥
कुसुमालमहोत्सवैर्विलासैर्विहरन्ती हरवल्लभा सखीभिः ।
ददृशे कृत(श)मध्यमा क्षमायां चरता शुम्भचरेण चण्डनाम्ना ॥ ४ ॥
अवलोक्य विलोकनीयकान्तिप्रकरद्योतितकन्दरोदरां ताम् ।
परमं परमेष्ठिनः शशंस प्रमदासर्गकलासु कौशलं सः ॥ ५ ॥
असुरप्रभवे निवेदयिष्यन्नबलारत्नमयत्नलभ्यमेतत् ।
जवनः पवनादपि स्वशोऽयं जगतां जन्मभुवं गिरिं जगाम ॥ ६ ॥
निवहेन ततं मतङ्गजानां ददता जङ्गमगण्डशैलशङ्काम् ।
स विलोकयति स्म शैलमुच्चैर्वलिवन्धोयदधोक्षजाङ्घ्रिबन्धुम् ॥ ७ ॥
मुनिमुद्रितशृङ्गिरुच्चदुच्चैर्मणिसानुद्युतिमण्डलाङ्गुलीकः ।
उपरि स्फुरतः सहस्ररश्मेः कुरुते यः किल तर्जनामजस्रम् ॥ ८ ॥
भुवि यत्प्रतिपद्यदन्तरिक्षात्सुरसिन्धोरिव यामुनः प्रवाहः ।
परितः कृतकस्तुरूलमालैलदकारिष्यत ते न संनिभोऽन्यैः ॥ ९ ॥
(त्रिभिः कुलकम्)
अथ तत्र पुरं पुरंदरारेः पुरुदर्पस्य ससर्प सोपसर्पः ।
वृजिनेन वृतं विशालकालायसवप्रव्यपदेशतः समन्तात् ॥ १० ॥

---

१. 'यः' ख.

सदनं तदनन्तरं स्वभर्तुर्मणिकार्तस्वरभास्वराजिराक्तम्।
विशति स्म विशां विशेषवृत्तग्रहणाय प्रथितः स मन्त्रवेदी ॥ ११ ॥
कनकाभरणप्रभापिशङ्गं सजलाम्भोदसहोदराङ्गभारम्।
विदितः स विलोकते स्म शुम्भं सदवं शृङ्गमिवाञ्जनाचलस्य ॥ १२ ॥
प्रणिधिः प्रणिपत्य दैत्यराजं तदनुज्ञामधिगम्य सम्यगुक्तिः।
वसुधावलयस्य किंवदन्तीं क्रमतः प्राक्रमत प्रवक्तुमेषः ॥ १३ ॥
असुराधिपते गतेषु दास्यं भवदातङ्कभरान्नराधिपेषु।
पतिरित्यतिरिक्तविक्रमेण प्रतिपत्तिर्भुवि भुज्यते त्वयैव ॥ १४ ॥
भुवनोपरिवर्तिनामुनाभूदसिदण्डेन शिरःसु माभिघातः।
मनसीति विशङ्क्य नूनमुच्चैः क्षितिपास्त्वां समुपासते नमन्तः ॥ १५ ॥
जितदुश्च्यवनाद्दशाननादप्यधिकस्ते दनुज प्रजानुरागः।
निजमौलिविकर्तनादयं यद्विदितस्त्वं परमौलिकर्तनात्तु ॥ १६ ॥
अपरैः प्रथिते कथाप्रबन्धादभिधाने तव भक्तवैरिमाने।
शिरसि प्रणते दिगीश्वराणां गलितास्त्रा करयोर्द्वयी प्रयाति ॥ १७ ॥
भुवनप्रभुतामपेक्ष्यमाणैरथ च त्वामभियोक्तुमप्रगल्भे।
स्वहिताय मतो दिशामधीशैः सदुपायस्त्वदनुप्रवेश एव ॥ १८ ॥
भवतः समराजिरेषु जेतुः शिरसि क्षेप्तुमभीप्सुभिः प्रसादम्।
अमरैरनुवेलमाहृतानां कुसुमानां तनुता सुरद्रुमेऽपि ॥ १९ ॥
अपरं च मया व्यलोकि चित्रं शृणु देव त्वमनन्यमानसस्तत्।
अवधानपरे नरे हि वक्तुः परभागं लभते मतेः प्ररोहः ॥ २० ॥
श्रवणप्रवणश्रुतिद्वयेन प्रभुणा तेन सकौतुकं प्रणुन्नः।
परिणामविदाहि हृद्यमादौ विपवद्वाक्यमुपाददे स दूतः ॥ २१ ॥
हिमवानिति विश्रुतस्त्रिलोक्यां गिरिरास्ते गिरिशाट्टहासगौरः।
उदगादिव यो दिवं दिधीर्षुः कमठेन्द्रे वसुधां निधाय शेषः ॥ २२ ॥
शिखरे शिखरीश्वरस्य तस्य प्रमदा काचन काञ्चनप्रभास्ति।
हसितामृतबिन्दुभिर्दिशन्ती विपमेषोस्त्रिजगज्जयाभिषेकम् ॥ २३ ॥

मणिकुण्डलकान्तिमण्डलेन स्फुरता सप्रसरं समन्ततोऽपि ।
परिवेषपरीतशीतरश्मिश्रियमभ्यस्यति मुग्धमास्यमस्याः ॥ २४ ॥
विकचाम्बुजचारुलोचना या नवमुक्तालतिका चकास्ति कण्ठे ।
मुखशीतमयूखबिम्बगर्भादिव पीयूषपृषत्क(त)तिः पतन्ती ॥ २५ ॥
मधुरस्वरहंसकाभिरामा घटितानेककटाक्षखञ्जरीटा ।
इयमात्मभुवः प्रबोधहेतुः शरदाकारवतीव भात्यतीव ॥ २६ ॥
वचसः स्थिरता दृशोश्चलत्वं कुचयोरुद्धततांसयोर्नतिश्च ।
उदरस्य दरिद्रता समृद्धिर्जघनस्य क्वचनापि नेदगस्ति ॥ २७ ॥
स पिता सुकृती च सा सवित्री शुभपात्रे च ययोरियं प्रसूतिः ।
पुरुषं च तमेकमेव मन्ये मृदितानङ्गमदं यदङ्कगासौ ॥ २८ ॥
उदकीर्यत किं शशाङ्कबिम्बाच्चुलकौघैयरुचिस्तनुस्तदीया ।
अथ सा मनसा व्यधायि धात्रा न करस्पर्शमलीमसं महस्तत् ॥ २९ ॥
सफलं यदि यौवनं चिकीर्षुर्मदृदैश्वर्यमिदं च जीवितव्यम् ।
तदविस्तरमेव देव हस्ते कुरु लावण्यसरःसरोजिनीं ताम् ॥ ३० ॥
चललोचनकृष्णसारचारु श्रुतिशालि द्विजराजिराजितं च ।
कुसुमायुधतापसाश्रमं तत्तव निर्वाणकृते तदङ्गमस्तु ॥ ३१ ॥
इति तद्वचनाद्विगाधितान्तःकरणं विष्टपकष्टकारणं तम् ।
मदनेन न केवलं नियत्याप्युपलब्धः समयश्चिरात्प्रहर्तुम् ॥ ३२ ॥
त्वरया स्मरदत्तया प्रयुक्तः प्रमदासक्तमनाः स नाकिवैरी ।
अनुकूलयितुं कुलाद्रिकन्यां पुनरन्यायसखं तमादिदेश ॥ ३३ ॥
कुसुमायुधकिंकरेण पत्या प्रहितः कर्मणि तत्र मित्रसाध्ये ।
मनसा मदमेदुरेण दूतस्तुहिनावासमसौ नगं जगाम ॥ ३४ ॥
पुरतः पुरमर्दनाङ्गनायाः प्रणतिं स प्रणिधिर्विधाय मूर्ध्ना ।
निजनाथभुजप्रभावमाविष्कुरुते स्म प्रचुरानुरागवीनम् ॥ ३५ ॥
भुवनाधिपतीनतीत्य लक्ष्मीर्यमुपास्ते वपुषा गुणैश्च रम्यम् ।

१. ईभाम् २ अविरम्यम् ३. लेश, गुण च ४ अह शुभोऽस्ति मर्त्य कर्मणि पत्ना निपुण इति गर्ने

स यदाह मदाननेन शुम्भः शृणु तद्देवि विचिन्त्य चानुगच्छ ॥ ३६ ॥
(हृदयं हृतदर्पकं दधानाः क्षितिपाः शोपवतीं मुखश्रियं च।
ज्वरिता इव न श्रयन्ति शर्म क्वचिद्'''''यति मे प्रतापघर्मे ॥ ३७ ॥
पुरतः परिभाव्य निष्कृपाणां रिपुराजन्यपरम्परावराकीम्।
शसनव्यसनोऽपि निष्कृपाणां प्रदराणां गणमुत्सृजामि नाजौ ॥ ३८ ॥
मम दिग्विजये चलद्दलौघोधृतधूलीपटलैस्तमस्विनी द्याम्।
उपलभ्य निरूष्मभिर्नरेन्द्रैर्विहितान्या''''''''तपानि दूरे ॥ ३९ ॥
अवलेपभृतां तु भूपतीनां दृढसंपातशरावलीविलूनैः।
मृधमूर्धनि मण्डयामि मुण्डैः क्षितिमेतामसृतांशुमौलिमूर्तिम् ॥ ४० ॥
मदमत्सरमन्मथेषु मन्दं हृदयं योगिवदन्वहं वहन्तः।
मरुतः पुरुषादितः प्रसन्ना द्रुतमेतेऽभिलषन्ति बन्धमोक्षम् ॥ ४१ ॥
समरे मम सिंहनादमुच्चैर्दरितद्वेषि गजव्रजं निशम्य।
हरिणा हरिणायितं भयेन भ्रमता भूधरगह्वरान्तरेषु ॥ ४२ ॥
न निहन्मि यमं गृहीतदण्डं धनदे किंनरराजतूल्यनास्था।
अरुणद्वरुणश्च मामकीनां दृढतां संयति ढौकितस्वपोतः ॥ ४३ ॥
अवहेलितहेलितेजसं मां वरिवस्यन्ति विरोधवध्यचित्ताः।
वसवः प्रसवैः सुरद्रुमोत्थैरबलानामुचिता हि पर्युपास्तिः ॥ ४४ ॥
यदुरः क्षुरपातितामर्दीयं कुलिशाग्राः स्पृशति स्म नालमाला।
अधुना तदिदं कदर्थयन्ति स्मरबाणास्त्वयि तन्वि सानुरागम् ॥४५॥
मयि तिष्ठ'''' विद्रुमोपमोष्ठि द्रुमरत्नं गजरत्नमश्वरत्नम्।
अपि त''''''''स्परिगृहीतुं स्पृहयामि प्रमदासु) रत्नभूताम् ॥ ४६ ॥
मयि वीरवरे सति त्वमन्यं पुरुषं नार्हसि बर्हकेशि गन्तुम्।
त्रपुणि प्रणयं करोति कान्ते तपनीयं व्यपनीय सन्मणिः किम् ॥४७॥
प्रणतेन हृदा विधाय वेधाः समरूपं मकरध्वजं च मां च।
अथ मन्मथमावयोर्मथित्वा निरमां निश्चितमेकरोपमेषः ॥ ४८ ॥

---

१. 'तिष्ठ' स्या. २. एतत्कोष्ठान्तर्गतः पाठः क-पुस्तके त्रुटितः.

मनुजैर्नियतात्ययैश्च देव्यास्त्रिदशैरमितसुखैश्च चन्द्रमुख्या ।
उरगै श्रुतिवर्जितैश्च शूद्रैरिव युक्ता न रतिस्तवोचमाया ॥ ४९ ॥
सह तु सदृपोरुपेण पत्या विहरन्ती हरिणेव पद्मवासा ।
मधुबन्धुषु विन्ध्यकाननेषु त्वमिमा निर्विश तन्वि काननर्द्धिम् ॥५०॥
तरसाहमजैषमेष पौरु भवती क्षणमधश्चकार कान्त्या ।
तदिद द्वयमावयो समेत समशक्तयोर्जगतोऽप्यजेयमस्तु ॥ ५१ ॥
ममविक्रमभीतभर्तृकाणा नरदेवोरगदेवसुन्दरीणाम् ।
पतिजीवितभैक्ष्यमिच्छतीना मम भद्रे भजनीयपादपद्मा ॥ ५२ ॥
मयि चेन्न रुचि प्रतापतीव्रे भज तन्मेऽवरज शुभ निशुम्भम् ।
तरणौ तरणे निरुद्धभावा सुखसेव्य शशिन कुमुद्वतीव ॥ ५३ ॥
इति तद्वचन निशम्य देवी हृदि कोप दधती वहि प्रसत्तिम् ।
शुशुभे सुतरा शमीव धूमध्वजगर्भा नवपल्लवोदया च ॥ ५४ ॥
अथ वागधिदेवताविपञ्चीरणितश्रीसहचारिणा स्वरेण ।
रजनीकरखण्डमण्डनस्य प्रमदा त निजगाद सादरेव ॥ ५५ ॥
भवताभिहित यदेतदात्मप्रभुविस्फूर्जितमङ्ग सगत तत् ।
यदभुक्षगजेन्द्र एव साक्षी विमद शुम्भमदस्य दुर्मदत्वे ॥ ५६ ॥
परमज्ञतया मया प्रतिज्ञा महती या विहितास्ति पूर्वमेव ।
शृणु तामपि सर्वथाप्यहेया सुभटानामिव सपरायभूमिम् ॥ ५७ ॥
रहितोऽपि गुणै कपालवानप्यपरिज्ञातकुलोऽप्यसश्रयोऽपि ।
स पतिर्मम विग्रह मया य सममानान्तमृगेन्द्रया विधाता ॥ ५८ ॥
तदिय क्रियते कथ प्रतिज्ञा वितथा निश्चितचित्तया कृता या ।
इदमेव महात्मना हि चिह्न व्यभिचारो वचसा न यत्कदापि ॥ ५९ ॥
तदुपैतु पति स दानवानामनुजो वा दनुजोत्तमस्य तस्य ।
समसंकरतो यैमाल्याय त्वरित यातु च भूपिताङ्गमार ॥ ६० ॥

---

१ अर्धनारीश्वरत्वायुक्त शरीरम् २ शङ्के रत , (पक्षे) सगरान्. ३ अयम् आल्याय, (पक्ष) यमाश्याय ४ अनकृत, (पक्षे) भूषित

वनितानुचितामिमां तदुक्तिं श्रवणाभ्यां परिगृह्य दैत्यगृह्यः[1] ।
निजगाद पुनः सहोपहासं हसितेन्दीवरपत्रदीर्घनेत्राम् ॥ ६१ ॥
वदने रसनास्ति यद्यधीना यदि दण्डश्च न जल्पतामनल्पम् ।
सुघटानुगतं[2] तथापि वाच्यः सुधियः श्रद्धते हि युक्तवाचः ॥ ६२ ॥
अमुनासि सखीजनेन मुग्धे कृतकप्रीतिपरेण शोचनीया ।
न निषेधति यो बलादपि त्वां प्रलपन्तीमुपपत्तिशून्यमेवम् ॥ ६३ ॥
कदलीदलकोमलाङ्गि दृप्यद्विपुदन्तिप्रतिघातकर्कशेन ।
अबले बलिना भटेन भीरु प्रधनं तेन तवेति विस्मितोऽस्मि ॥ ६४ ॥
अमराः समराय नोत्सहन्ते सह येनाशनिदण्डचण्डदोष्णा ।
अपि तं वनिता विरोद्धुमिच्छत्यसहायेति नमोऽस्तु मोह तुभ्यम् ॥६५॥
अवलेपममुं विमुञ्च बाले बलतामत्र[3] तवानुरागि नेत्रम् ।
सफलास्तु ममार्थना विनाशं त्वयि देवोऽपि करोतु मावमानात्॥६६॥
अपरं परिभूतिकारणं तु प्रभविष्णोरपि भावयामि भर्तुः ।
यदयं भवतीं विभाव्य भव्यां भविता निश्चितमात्मनोऽप्यनीशः॥६७॥
वचनानपनेयनिश्चयां तां दितिजेन्द्रानुचरोऽवगम्य सम्यक् ।
गिरिमेष निमेषतोऽपि रेवापवितग्रावसमाजमाजगाम ॥ ६८ ॥
विषमेक्षणपक्ष्मलेक्षणायाः[4] प्रमदावर्गविरुद्धमुद्धतत्वम् ।
तदुपागमनोत्सुकस्य पत्युः कथयामास समासतः स तस्य ॥ ६९ ॥
कुंचरः[5] स चरप्रजल्पितान्ते दितिजं तद्विजयक्षमं दिदृक्षुः ।
स्मरमत्सरयोः समर्पितात्मा भ्रमयामास दृशं सदस्युदीर्णाम् ॥ ७० ॥
असुरः सुरयेव संपदा किं विषयैर्वा विषसंनिभैर्विमूढः ।
अवलोकयति स नैव यस्माद्वनितावेषधरं पुरोऽपि मृत्युम् ॥ ७१ ॥
चपलप्रकृतिः प्रभूतरागा भुवमालीमिव बिभ्रती च वक्राम् ।
दितिजे स्थितिमाप तस्य दृष्टिः कुलटेवासति धूम्रलोचनाख्ये ॥ ७२ ॥

१. दैत्यपक्षीयः. २. 'मित्र' क. ३. घटमानम्. ४. 'रा' ख. ५. शुम्भे.
६. गौर्याः. ७. कुटिलाशयः.

अथ मन्दरमथ्यमानपाथोनिधिपाथोरवगौरवं गिलेन ।
तमयं ध्वनिना निनादिताद्रिर्विनयप्रार्थितवाचमित्युवाच ॥ ७३ ॥
अयि वीर शरीरवानसि त्वं मम विश्वैकभुजो भुजप्रतापः ।
मदनज्वरशान्तये तदेतां दयितामौषधिमानयाचलेन्द्रात् ॥ ७४ ॥
मनुते प्रथम न चेदुपायं पुरुदर्पोप्यचतुर्थमाश्रयेथा. ।
यदि कोऽपि करोति पक्षपातं तव जातं समरार्थिनः प्रियं तत् ॥७५॥
तदनु स्वतनुव्ययेऽपि सज्जः प्रभुसंभावितया प्रवीरवृत्त्या ।
उदतिष्ठदसौ ससौष्ठवं तां द्रुतमानेतुमनाः पिनाकिपत्नीम् ॥ ७६ ॥
तरणेस्तिरयन्मरीचिजालं जलधीनामपि पङ्कयन्पयांसि ।
प्रसरत्तुरगोद्धतैः परागैरगराजं स जवादवाप दैत्य ॥ ७७ ॥
हरितः परितः प्रकाशयन्तीं कनकाभेन निजांशुजालकेन ।
असुरः पुरवैरिवल्लभां तां शलभो वह्निशिखामिवाभ्यपप्तत् ॥ ७८ ॥
इति चायमुवाच वामनेत्रे करणीयद्वितयेऽत्र ते यदृच्छा ।
भवमाप्नुहि तोपिताद्धि पूर्वं परिपूर्वं दितिजादतोपिताद्वा ॥ ७९ ॥
अथ मोघवचाः कचावकृष्टिं कुपितः कर्तुमियेष यावदेष ।
कृतहुंकृतया तयात्मकर्मार्जितमृत्यु क्रियते स भस्म तावत् ॥ ८० ॥
नीते तस्मिन्भस्मभावं भवान्या सैन्ये जन्यादाशु नष्टे वशिष्टे ।
आदित्यानां दैत्यभीत्याकुलानां रक्षाहेतुः सैव रक्षा बभूव ॥ ८१ ॥

इति श्रीगुर्नरेश्वरपुरोहितश्रीसोमेश्वरदेवविरचिते सुरथोत्सवनाम्नि महाकाव्ये धूम्रलोचनवधो नामाष्टम सर्ग ः

---

नवम सर्ग ।

दैत्योदन्तेन तेनायं नायको नाकविद्विषाम् ।
दण्डेन कुण्डलीवाथ व्याचक्रे व्यथित क्रुधा ॥ १ ॥
ऊर्ज्वा कचावलिस्तस्य पक्वकाण्डनिभा व्यभात् ।
ज्वाला कोपानलस्येव भित्त्वा मूर्धानमुत्थिता ॥ २ ॥

---

१ भस्म २ कोपादुर्ध्वीभूता

उदितस्वेदबिन्दूनि तदङ्गानि विरेजिरे ।
अङ्गीकृतजलानीव रोषाग्निप्लोषशङ्कया ॥ ३ ॥
दन्तैर्दङ्क्षति मां क्षिप्रमसाविति ससाध्वसः ।
मन्ये मन्युमतस्तस्य स्फुरति स्म रदच्छदः ॥ ४ ॥
दारुणस्यारुणाख्यस्य दैत्यभर्तुः स्वभावतः ।
भृकुटीभीषणे भाले कोपः स्फुटमलक्ष्यत ॥ ५ ॥
शुम्भः सभानिषण्णानामविषण्णमदोष्मणाम् ।
विभागं व्यसरत्तेषां क्रुद्धः स्वस्याः श्रिया इव ॥ ६ ॥
ज्येष्ठं ज्येष्ठमिवोदीक्ष्य ज्वलन्तं निजतेजसा ।
वोढुं[1]माषाढवत्तापं निशुम्भोऽन्वपुषद्रुषा ॥ ७ ॥
स कालक्रो[2]सरारालश्टङ्गसब्रह्मचारिणा ।
कोपाटोपार्पितेनासीद्भ्रूभङ्गेनातिभीषणः ॥ ८ ॥
सङ्करा[3]सङ्गसंभूतां बिभ्रता रोमविक्रियाम् ।
धूपद्विपा[4] बिडालेन[5] बिडालेनेव चुक्रुधे ॥ ९ ॥
क्रुधा दुधाव मूर्धानं चरमं चामरासुरः ।
चकम्पे प्रथमं तस्माच्चकिताज्जगतां त्रयी ॥ १० ॥
कुपितः पाणिना जङ्घामाजघ्ने जाङ्घिकस्तथा ।
यथैषापि रुषेवाभूल्लोहिता लोहितादपि ॥ ११ ॥
रक्तबीजो जरद्गुञ्जाबीजरक्तो रुषाभवत् ।
चण्डमुण्डौ च साक्षेपमुण्डचण्डौ बभूवतुः ॥ १२ ॥
अगृहीत्वापि संनाह[6]मसंनाहं कृतः क्रुधा ।
उत्तिष्ठन्पीठकः पीठात्कथंचिदपरैर्धृतः ॥ १३ ॥
अकृतारिपरित्राणं कृपाणं कम्पयन्करे ।
मूको मूकोऽपि कोपेन स्वं चख्यौ संख्यकाङ्क्षिणम् ॥ १४ ॥

---

१. 'वा' ख.  २. 'क्रो' ख.  ३. आसक्तिः.  ४. इन्द्रो, मूषकश्च.  ५. दैत्येन.
६. अम्लान.

यानं विलम्बमानानामन्येषामथ मन्युना ।
चकार क्षारणां वाचा क्षुक्षुर(?)क्षुरतीक्ष्णया ॥ १५ ॥
रणप्रकरणारम्भे विप्राणं न प्ररोचनम् ।
दुर्मुखस्य सरोषस्य मुखमामुखतां ययौ ॥ १६ ॥
हिमाद्रिमुद्रितामाशा धेनुकः सासिधेनुकः ।
आलुलोके मुहुर्वह्निस्फुलिङ्गसदृशा दृशा ॥ १७ ॥
वार्ष्कलः कलहश्रद्धा दधानोऽपि मदोद्धतः ।
अरातिरवलेत्यासीद्विचिकित्समना मनाक् ॥ १८ ॥
रोषरक्तीकृतैर्दैत्यैर्दैत्यभर्तुरभात्सभा ।
भूर्विन्ध्यभूधरस्येव गैरिकारुणितैरिभैः ॥ १९ ॥
नवाभ्रसंनिभः शुम्भः शातकुम्भविभूषितात् ।
सिंहासनादथोत्तस्थौ धूमो धूमध्वजादिव ॥ २० ॥
पीठादुत्तिष्ठतस्तस्य चरणेनानुचस्खले ।
अव्यापाराय धावन्ती प्रथमं स्खलिता मतिः ॥ २१ ॥
दुर्निमित्तं निमित्तज्ञस्तद्विभाव्य विभोर्महत् ।
उवाच वचनं मन्त्री मयोऽथ समयोचितम् ॥ २२ ॥
पुनराचर वीरेन्द्र भद्रासनपरिग्रहम् ।
पूजितानि निमित्तानि पूजयन्ति हि तान्यपि ॥ २३ ॥
तं काञ्चनासनासीनमासन्नव्यसनं पुनः ।
शङ्कमानोऽपि निःशङ्कमवोचत्सचिवोत्तमः ॥ २४ ॥
सर्वविद्याविदो देव के वयं पुरतस्तव ।
तथापि त्वय्यसौ भक्तिर्वक्तुकामं करोति माम् ॥ २५ ॥
नृपतिभिर्नृपामुर्धमदेमोऽस्मार्गगामिभिः ।
दमयद्भिर्महामात्रैश्चित्रं यज्जीव्यते चिरात् ॥ २६ ॥

---

१. रूपभेदः. २. 'ना' क. ३ 'गतम्' ख. ४ 'क' ख. ५. 'ह्रो' ख.
६ क्रिय हन्मि न वा ७ मन्त्रिभिः, हस्तिपकैश्च.

क्षन्तव्यं देव यद्वक्ष्ये यस्मादाप्तोदितं वचः।
आदौ तप इव निभ(क्लि)ष्टमिष्टमन्ते च जायते॥ २७॥
याति स्थाने नियुक्तेन तिक्तेन मधुरेण वा।
वचसा सचिवः ख्यातिमायुर्वेदीव जायुना॥ २८॥
मैत्री मन्त्रिगिरां युक्ता सहकारफलैः सह।
यत्रादौ तीव्रता किंचित्साधु माधुर्यमन्ततः॥ २९॥
प्रियैकभाषिणः पूर्वं जनात्पर्यन्ततापिनः।
भेतव्यं क्षरतोऽप्यम्भश्चित्रा वारिधरा इव॥ ३०॥
देव त्वमेव शास्त्रेषु शस्त्रेषु च विचक्षणः।
तदविज्ञाततत्त्वेऽर्थे सहसा किं प्रवर्तसे॥ ३१॥
स एवाम्भोधिकल्लोललोलां छलयति श्रियम्।
चतुरोऽपि चिकीर्षित्वा तिष्ठते मतिमत्सु यः॥ ३२॥
केयं कस्याथ कस्माद्वा तिष्ठत्येकाकिनी गिरा।
इति निर्धार्य कार्याय युक्तः कर्तुमुपक्रमः॥ ३३॥
विधिवन्निर्मितैर्दैवैकर्मभिर्मन्त्रपूर्वकैः।
स्पष्टमिष्टफलं राजा यजमान इवाश्नुते॥ ३४॥
स्त्रीनेपथ्यमपथ्यं नस्तदेतन्नूनमुत्थितम्।
इति व्याकुलतायत्तं चित्त व्याहरतीव मे॥ ३५॥
स्त्रियोऽपि चित्रविन्यस्तादपि त्रस्यन्ति संगरात्।
युयुत्सते सा तत्रापि त्वया तदिदमद्भुतम्॥ ३६॥
विभो संरम्भमुत्सृज्य भवतापि विभाव्यताम्[१]।
गोपालो ननु भूपाल स्तूयते [२]विचारकः॥ ३७॥
किं च वीर विरञ्चोऽपि वरविश्राणनक्षणे।
उत्ससर्ज वधूवर्जमाजौ विजयिता तव॥ ३८॥

१ वशीकरोति २. संबोधनम्; (पक्षे) देवतार्थ कर्मभि. ३. अवीन् चारयति, (पक्षे) विचारहीन

इमा तामिव पश्यामि स्वामिन्नमितविक्रमाम् ।
भिन्दन्ति हृदय हार्वैर्नहि प्रहरणै स्त्रिय ॥ ३९ ॥
न भव्या भवत सेय कैविमार्गानुगामिन ।
देव काव्य इव स्त्रैणे सतृर्णाव्यवहारिता ॥ ४० ॥
अँसत्त्व किं नु येनाजौ सोढा वज्रदृढाहति ।
कौसुमैरपि कन्दर्पप्रदरैर्दारितोऽसि यत् ॥ ४१ ॥
अद्य माद्यतु कन्दर्प सदर्प स्वर्गिणा पुर ।
येन त्वमविधेयोऽपि बलान्नीतो विधेयताम् ॥ ४२ ॥
ऐश्वर्ये वर्तमानाना कुर्वता वा पर तप ।
नृणा हि करणग्रामनिग्रह सिद्धिकारणम् ॥ ४३ ॥
काम सापि त्वया जिग्ये(ग्ये) स्त्रीजयात्तव किं यश ।
व्यतिरेकोऽर्थ को मत्वा मृत्युमाह्वयते स्वयम् ॥ ४४ ॥
नाधिक शक्यते जेतु न च नीचजये यश ।
समेन युधि सदेहस्तस्मात्पुसा क्षमा क्षमा ॥ ४५ ॥
तदुपस्थीयतामेषा द्वेषादाकृष्यता मन ।
शास्त्रदृक्फलमेतद्धि दृश्यते कृत्यवर्त्म यत् ॥ ४६ ॥
एतस्मादशुभारम्भान्निवर्तस्व प्रसीद मे ।
देव मा दर्शय द्वार विधेश्छिद्रावलोकिन ॥ ४७ ॥
दुराचरति यो गर्वात्पूत्कुर्वाणेषु बन्धुषु ।
हठान्निष्ठुरदण्डेन स दैवेन विनीयते ॥ ४८ ॥
बोधितोऽपि स तेनेति हित नोऽबुध्यतात्मन ।
पैङ्कभीतेव नाधत्ते पद जाल्मे विवेकिता ॥ ४९ ॥
वृथाकुर्वन्वचस्तस्य मुमूर्षुरिव भेषजम् ।
बभाषे भीषणाकार सुधाहारविरोधिराट् ॥ ५० ॥

---

१ या ब्रह्मणा निषिद्धापि २ शुक्र, कविता च ३ अविवेकित्वम् ४ न स
५ बाणै ६ त्व या तया जीयसे ७ आराध्यताम् ८ पाप

सदृशं यत्सुहृद्वृत्तेर्बाहुश्रुत्यस्य यत्क्षमम्।
साचिव्यस्योचितं यच्च तदूचे भवता वचः॥ ५१॥
स वाग्मी व्याहरन्नर्थं पुरो दर्शयतीव यः।
*तन्मित्रं स्वयमापत्ति पतन्तीं यः प्रतीच्छति॥ ५२॥*
शास्त्रैः संस्क्रियते बुद्धिर्वृद्धैः साधूपदिश्यते।
तदन्यदेव सौभाग्यं जयश्रीर्येन भुज्यते॥ ५३॥
वेत्तु विद्याश्रुतस्तोऽपि तानुपायांश्च तावतः।
विक्रमेण विनैकेन नारिपु क्रमते मतिः॥ ५४॥
अतत्त्वज्ञोऽपि सत्त्वं चेदुद्धिनोति(च्छिनत्ति) द्विषां शिरः।
रणे केसरिणः केन वद वैदुष्यमर्पितम्॥ ५५॥
पौरुषोत्कर्षदृप्तानां व्यर्था शास्त्रनियन्त्रणा।
अकुण्ठजठराग्नीनामाहारनियमो हि कः॥ ५६॥
न दोषो मनुषे यन्मामपि जेयं स्त्रिया तया।
तवात्र विगलद्बुद्धेर्वृद्धत्वमपराध्यति॥ ५७॥
भिन्नवानस्मि यः शक्रकुम्भिकुम्भद्वयीमपि।
तस्य मे स्त्रीकुचद्वन्द्वं भिये किल भविष्यति॥ ५८॥
इयं नः शङ्कनीया चेत्तदुपेया विशेषतः।
स धीरः सति भीहेतौ निर्भीरस्येति यः परान्॥ ५९॥
साम यद्दीयते विप्रैर्दानं यच्च प्रसादतः।
भेदनं चोरसः शत्रोर्जानेऽहं दण्डपण्डितः॥ ६०॥
नाहमाहर्तुमिच्छामि कामार्तः कामिनीमिमाम्।
अस्वामिकं हि भूस्वामी सर्वमादातुमर्हति॥ ६१॥
न मानी प्रत्यनीकाय नमयत्युन्नतं शिरः।
वरमुर्व्यामसिच्छिन्नं गच्छदप्येतदिच्छति॥ ६२॥
अरिः प्रणतिलब्धेन जीवितेनापि तेन किम्।
मृत्युरप्युपलभ्योऽसौ योऽभ्येति छिन्दतां द्विपः॥ ६३॥

---

१. शौर्यं नाम. २. 'न्वे' क. ३. प्रशस्यः.

अक्षतस्त्वं क्षतांशेन क्षेममेतद्भवादृशाम् ।
शूरैर्वागपि शौर्यघ्नी दुःसहा किं पुनः क्रिया ॥ ६४ ॥

संमतं सूत्रकाराणां कुर्वतां परशासनम् ।
ननु मानैकजीवानां मात्रयापि हि लाघवम् ॥ ६५ ॥

तामहं निहनान्येव सा मां समिति हन्तु वा ।
वीराणां हि शिरश्छेदान्नासाच्छेदोऽतिदुःसहः ॥ ६६ ॥

किं नाप्तं तेन वीरेण रणान्तर्व्ययितात्मना ।
दुर्मुखानपि यः शत्रून्निजश्लाघामचीकरत् ॥ ६७ ॥

इत्युदस्य वचस्तस्य मात्यं मत्त इव द्विपः ।
उदस्थादयमास्थानादस्थानारब्धविग्रहः ॥ ६८ ॥

ततो गिरा जरद्धोपॅभपणोद्धोपघोरया ।
सैन्यसंनहनायाशु सैनिकानादिदेश सः ॥ ६९ ॥

तदादेशेन देवानां चेलुरुच्छृङ्खलाः खलाः ।
कल्लोला इव कल्पान्तपवनेन पयोनिधेः ॥ ७० ॥

तनुत्राणं तनुत्राणं शस्त्रं शस्त्रं रथो रथः ।
इति शुश्रुविरे विश्वयुद्धटाः सुभटोक्तयः ॥ ७१ ॥

मर्मकिर्मीरितैर्वीरा वर्मभिस्ते विरेजिरे ।
बालार्कातपसंपृक्ताः प्रचलन्त इवाचलाः ॥ ७२ ॥

स्त्रीति तस्यामनास्थातो जग्राह ग्राहितो परैः ।
शौर्योत्कण्टकितैरङ्गैः कङ्कटं विश्वकण्टकः ॥ ७३ ॥

मरुतां विपरीतोऽयं परीतः खड्गपाणिभिः ।
अन्वभूदिव जीवन्नप्यसिपत्रवनस्थितिम् ॥ ७४ ॥

चिक्षेपे शुम्भपक्षीयैर्जयैनं वाजिराजिषु ।
मूढैर्नाजयनं भावि व्यभावि पुनरारमनः ॥ ७५ ॥

---

१. उत्कृष्टदाक्ष्र, वैरिवध च  २. ग्रन्थसंक्षेपः, तेजोहानिश्च.  ३. पती.  ४. देववै-रिणा.  ५. संनाहः.  ६. पराजयः.

कल्पिताः किल दैतेयैः कुञ्जराः संगराय ये ।
विधिना ते कृतान्ताय निर्विकल्पं तु कल्पिताः ॥ ७६ ॥
देवी यत्रास्ति मा तं गाः शैलमित्यलिनां रुतैः ।
मन्ये तं दोर्मदोन्मत्तं मातङ्गा अप्यवारयन् ॥ ७७ ॥
चक्रिणां चक्रवालेन विशालेन सकेतुना ।
[1]नभसा च बभूवेऽस्य संपरायं प्रयास्यतः ॥ ७८ ॥
वाहैर्विहितसंनाहैः सवरूथैरथैरथ ।
सज्जैर्गजैश्च संकीर्णा तत्सौधद्वारभूरभूत् ॥ ७९ ॥
वैयाघ्रं दानवव्याघ्रः स्यन्दनं सांपरायिकम् ।
आरुरोह जगद्द्रोहसाहंकृतिभिरायुधैः ॥ ८० ॥
प्रतापोद्धतयोर्युद्धं नैतयोर्भूदिति ध्रुवम् ।
अन्तरे तस्य भानोश्च जातमातपवारणम् ॥ ८१ ॥
[2]अप्रमाणबहुत्वेन श्रुतिबाधाविधायिना ।
नि[3]स्वाननिस्वनेनास्य नास्तिकत्वमवाप्यत ॥ ८२ ॥
दिशो दुन्दुभिनादेन हास्तिकेन महीतलम् ।
उच्चैः सा रजसा व्योम व्यश्नुवानाचलच्चमूः ॥ ८३ ॥
शुम्भे प्रचलिते लोलत्पताकाकेशपाशया ।
रुरुदे दैत्यलक्ष्म्येव प्रयाणपटहस्वनैः ॥ ८४ ॥
चलद्बलत्समुद्भूतधूलीदण्डच्छलेन सः ।
चकितः किल शैलोऽपि तमेवमनुजग्मिवान् ॥ ८५ ॥
उद्भ्रेऽश्वखुरैस्तीव्रैस्तपोभिरिव भूरजः ।
पातितं मलिनैर्वृत्तैरिव दन्तिमदाम्बुभिः ॥ ८६ ॥
तेन भूतज्वरेणेव मुच्यमानः प्रतापिनः ।
शैलः सिष्वेद सैन्येभमदाम्भःसेकदम्भतः ॥ ८७ ॥

१. केतूदयोऽपि जातः. २. अपरिच्छेद्य बहुत्वं यस्य, (पक्षे) न विद्यते प्रमाणबहुत्वं यस्य. नास्तिका हि 'प्रत्यक्षमेव प्रमाणम्' इति मन्यते. ३. दुन्दुभि ४. 'लोल' ख.

तत्कुम्भिकुम्भसंभूते कर्णतालानिलोद्धुते ।
दूरा(र)मुच्चति सिन्दूरे दिशां दाह इवाभवत् ॥ ८८ ॥
वैमानिकनिकायेन पश्यतापि प्रयत्नतः ।
उपलेभे बलस्यान्तो नाग्रे नानु न पार्श्वतः ॥ ८९ ॥
तुषारदिग्बन्धनतोङ्गमद्रेरुच्छिद्रसिंहासु महागुहासु ।
नेदिष्ठनाकारिवलानकानां ध्वानः प्रतिध्वानगुरुर्बभूव ॥ ९० ॥
शनैः समासीदति दैत्यसैन्ये मयूरपिच्छातपवारणौघैः ।
धराधराधीश्वरपार्श्वजातां कान्तारपङ्क्तिः पृथुतां प्रपेदे ॥ ९१ ॥
स्फुरत्तुरगमण्डलीखुरमुखाभिघातोच्छल-
त्परागपटलच्छलादुपरिभूतभूमण्डपम् ।
बलं बलिनिवासवत्समणिनीगरौद्रं रवि-
त्विषामविषयं जनो ददृशिवान्नगेन्द्रस्थितः ॥ ९२ ॥
तस्याश्वीयखुरक्षतक्षितितलप्रेङ्खत्परागच्छटा-
विच्छायीकृतमण्डलच्छविरवि व्योमाग्रमालोकयन् ।
मध्याह्नेऽप्यभिसृत्य किन्नरवधूवर्गैः सह स्वर्गिभिः
कल्याणं कुसुमायुधस्य विदधे कल्पद्रुमाणामधः ॥ ९३ ॥

इति श्रीगुर्जरेश्वरपुरोहितश्रीसोमेश्वरदेवविरचिते सुरथोत्सवनाम्नि महाकाव्ये दैत्यप्रयाणको नाम नवमः सर्गः ।

---

दशमः सर्गः ।

ततस्तद्बलमालोक्य त्रैलोक्यमपि चुक्षुभे ।
युयुत्सयोत्सुका जज्ञे महेषमहिषी पुनः ॥ १ ॥
विकस्वरेण चक्रेण करेणायुधकर्पिणा ।
दर्पामर्पाम(व)सौ व्याञ्जीदासीदत्याहवोत्सवे ॥ २ ॥
निजेनांशुप्रतानेन प्रकाशं कुर्वती दिशाम् ।
पार्वती पृ(द)ष्टिक(रु)ल्केव पपाताभिद्विषच्चमूम् ॥ ३ ॥

१. 'तो' ख. २. दर्शिन , सर्पोश्च.

सर्वासामात्ममूर्तीनां ससार सरजिस्त्रिया।
आगतास्ताश्च तद्देहादन्यतो वेति संदिहे[1] ॥ ४ ॥
न नाम नाशकज्जेतुं दैत्यानेकापि किंतु सा।
सुखं तदैच्छदाच्छेतुं सर्वाभिरिव मूर्तिभिः ॥ ५ ॥
विभासमाना हंसेन लसत्तामरसद्युतिः।
प्रातः संध्येव वैरघ्नी शक्तिर्व्यक्तिमुपागता ॥ ६ ॥
द्विरदाजिनसंव्याना द्विजराजावतंसिता।
द्विजिह्ववलया देवी द्विधाकर्तुं द्विपोऽभ्यगात् ॥ ७ ॥
प्राप्ता राकेव वैशाखी चैश्वचन्द्रकरोचिता।
उल्लासो दानवार्तानां प्रावर्तत यदागमे ॥ ८ ॥
व्यक्तकस्तूरिकाकान्तिः शङ्खचक्राब्जशालिनी।
कालिन्दीव वलोत्कृष्टा दृष्टा देव्यथ वैष्णवी ॥ ९ ॥
वाराही राहुवक्रान्तार्निर्यदिन्दुकलामलाम्।
क्षमाभारक्षमां दंष्ट्रां दधती द्रागदृश्यत ॥ १० ॥
नारसिंही समेता च तैरेव नखरैः खरैः।
शौर्यं साक्षादिव द्रष्टुं प्रविष्टा हृदि ये द्विषः ॥ ११ ॥
दानवारिपवित्रेण गजेन्द्रेण च जिष्णुना।
ऐन्द्री रोहि(हरि)दिवायाता प्रकाशितरविग्रहा ॥ १२ ॥
नीलीरसैर्विलीतेव घटितेव धनोच्चयैः।
मिश्रितेव तमिस्रेण वृतेवायसवर्मणा ॥ १३ ॥
मातेव शितिपक्षस्य धूमस्येवाधिदेवता।
छायेवाञ्जनशैलस्य कालियाहेरिवात्मजा ॥ १४ ॥

१. सदेह करोमि. २. शत्रुवधरूपम् ३. गृहीतुम् ४. कार्तिकेयी वैशाखी पूर्णिमा च. ५. चश्वचन्द्रको मयूरः; (पक्षे) चश्वचन्द्रकैरुचिता. ६. दैत्यपीडितानाम्; (पक्षे) वैशाख्या हि दानानि दीयन्ते. ७. वलदेवेनोर्ध्वमाकृष्टा; (पक्षे) वलेनोत्कृष्टा. ८. हिरण्यकशिपोः. ९ मदजलसुन्दरेण; (पक्षे) दानवानामरिर्दानवारिः, पविर्वज्रं तेन त्रायते सः. १० जयशीलैरैरावणोपलक्षिता; (पक्षे) ऐरावणेन जिष्णुनेन्द्रेणोपलक्षिता. ११. प्रकाशितरो दीप्तिमत्तरो विग्रहो यस्या सा, (पक्षे) प्रकाशितमुदय नीतो रविरेव ग्रहो यया.

करस्थेन कपालेन लोलया च रसज्ञया ।
सबलाका सविद्युत्कामभ्रालिमनुकुर्वती ॥ १५ ॥
महान्तमश्रुवानेन सर्वतोऽपि खमाश्रयम् ।
स्फुटाट्टहासशब्देन त्रासयन्ति जगत्त्रयम् ॥ १६ ॥
समाजगाम चामुण्डा मण्डिता मुण्डमालया ।
विस्फुरत्तारकव्यूहा कुहूरिव शरीरिणी ॥ १७ ॥

(पञ्चभिः कुलकम्)

भेदैर्भिन्नापि भूयोऽपि एकैव ध्रुवमम्बिका ।
व्यक्तीना हि बहुत्वेऽपि न जातिर्जायते पृथक् ॥ १८ ॥
केसराङ्कुरितस्कन्धो लोलल्लाङ्गूललाङ्गल. ।
व्यात्तवक्त्रगुहः सिंहो गुहमातुः पुरोऽभवत् ॥ १९ ॥
नूतनोन्नतिनानन्तनतेर्नानीतनीतिना ।
नितान्तं तेनें तातेन तत्तनूतनुता नुता ॥ २० ॥

(द्व्यक्षरः)

तरङ्गैरिव रङ्गद्भिस्तुरङ्गैः फेनवन्मुखैः ।
आगच्छदिच्छयैवास्याः स कुतोऽपि बलाम्बुधिः ॥ २१ ॥
देव्या सङ्ग्रामगामिन्या मन्ये मङ्गलकाम्यया ।
शुण्डार्कुम्भशुभाग्रेऽभून्मत्ता मातङ्गसंततिः ॥ २२ ॥
चेतः किमेतदस्मत्तोऽप्यधिकं वेगवत्तया ।
इति न्यञ्चन्मुखैर्वक्षो वीक्षमाणैरिवेर्ष्यया ॥ २३ ॥
नभस्वान्केवलं यायुरैनिलास्त्वित्यहंयुभिः ।
नभो द्वाभ्यामिला द्वाभ्या पद्भ्या नूनमधिष्ठितैः ॥ २४ ॥
मनोज्ञपदविन्यासैः कवीनामुचितैश्च तैः ।

---

१ आकाशम् २ अपूर्वाच्छ्रायेण ३ ईश्वरनतेन श्वशुरत्वात्. ४. प्रकाशितनयेन ५ प्रसिद्धेन हिमवता ६ तच्छरीरकार्श्यं स्तुतम् ७ कर , मदिरा च ८. कटी, घटी च. ९ गजा , अन्त्यजाश्च १० नभ एव विद्यते यस्मिन् ११ इलारहित· १२ खलीनाम्, काव्यकर्तॄणा च

रथारूढो रथारूढं पत्तिः पत्तिं गजो गजम् ।<br>
तुरङ्गस्थस्तुरङ्गस्थं मिथः प्राहरताहवे ॥ ४८ ॥<br>
चतुर्विधायुधाघातैश्चतुरङ्गचमूवराः ।<br>
दर्शयामासुरन्योन्यं कृतप्रतिकृतानि ते ॥ ४९ ॥<br>
व्याकृतस्वौजसां नाम्नामिव शौण्डीर्यशालिनाम् ।<br>
इतरेतरयोगेऽपि द्वन्द्वे तत्रैकताभवत् ॥ ५० ॥<br>
स वन्द्यः सादिसंदोहः संप्रहारप्रवृत्तये ।<br>
उत्थातुमिच्छतो यस्य बालैः प्रथममुत्थितम् ॥ ५१ ॥<br>
न तत्र तत्रसे शस्त्रघातार्तैरपि वाजिभिः ।<br>
विकारो नहि जात्यानां विपद्यप्युपपद्यते ॥ ५२ ॥<br>
युद्धे जयः श्रियः सौधे पांशुपूरान्धकारिते ।<br>
प्रहरद्दन्तिदन्तोत्थैः पावकैर्दीपकायितम् ॥ ५३ ॥<br>
कुम्भेभ्यः कुम्भिनां कुन्तक्षतेभ्यः क्षतजस्रुतिः ।<br>
प्रससार ततोऽप्युच्चैर्मदवीचिः कपोलतः ॥ ५४ ॥<br>
वारणाक्षतभूरीभे भेरी भूतक्षणारवा ।<br>
वादिता परमे प्रासं संग्रामे रपता दिवा ॥ ५५ ॥

(प्रतिलोमानुलोमार्धः)

युद्धश्राद्धे पतन्मुण्डपिण्डे खण्डितखड्गिनि ।<br>
कुथोपप्रथितास्तत्र विकराः करिणोऽभवन् ॥ ५६ ॥<br>
शरासारैस्तथा वृष्टं मेघैरिव महारथैः ।<br>
यथा रक्तजला नद्यः सद्यस्तत्र प्रसुस्रुवुः ॥ ५७ ॥<br>
शान्ते रजसि रत्नौघैः सुप्रेक्षा समरक्षितिः ।<br>
अभूदप्सरसां वीरवरलिप्सोत्कचेतसाम् ॥ ५८ ॥

१. मुक्तामुक्तममुक्त करमुक्त यन्त्रमुक्त च. २. स्वौजसामात्मनलानाम्; (पक्षे) स्वौजसां प्रथमाविभक्तिवचनानाम् ३. एकवचनम्, मिथत्व च. ४. शिशुभिः, केशैश्च. ५. गजाहतबहुगजे. ६. भूतोत्सवकारी आरवो यस्याः. ७. केनचिद्दिनाश रपता जल्पता न भवसीत्यादि रात्रौ युद्धाभावात्. ८. गण्डकाश्च. ९. कम्बलाः, दर्भाश्च. १०. शुण्डरहिताः, अग्रपुञ्जाश्च.

मार्गणैर्मार्गणा एव भग्ना न तु भटैर्भटाः ।
पताकास्वेव नो तेषामाकम्पो मानसेऽप्यभूत् ॥ ५९ ॥

(अतालव्यः)

क्रोधान्धौ योद्धुमारब्धावात्मीयावेव कौचन ।
पुनः संप्रतिपन्नौ च स्वामिनामन्युदीरिते ॥ ६० ॥

कृपाणे पातिते पाणेः प्रतिमल्लेन मल्लवत् ।
दन्तैर्नियुध्यमानोऽभूदपरो वीरकुञ्जरः ॥ ६१ ॥

युद्धेऽभिधावतो भल्लभिन्नोरस्कस्य कस्यचित् ।
रक्तधारापतत्सैव रेखाग्र्या सुभटेष्वपि ॥ ६२ ॥

परासुः परतो बन्धुर्निर्यन्त्रैः पादयन्त्रणा ।
वीराणामन्तरायोऽभून्न रिपूनभिगच्छताम् ॥ ६३ ॥

द्वयोऽपि सेनयोस्तत्र कोऽपि नाम न सायुधः ।
विक्रमन्नपचक्राम कोपिना मनसा युधः ॥ ६४ ॥

अरिदारितपादोऽन्यो जानुभ्यां समसुव्रजन् ।
नीचैरपि भवन्नुच्चैर्बभूव भुजशालिनाम् ॥ ६५ ॥

संहृत्य संगरे शत्रुं शस्त्रघातातुरः परः ।
अन्वगाढिव तं जेतुमपि लोकान्तरे गतम् ॥ ६६ ॥

वीरस्यारिक्षुरप्रेण क्षितिं नीतेऽपि मूर्धनि ।
न शस्त्री पतिता हस्ताद्भ्रुकुटी न च भालतः ॥ ६७ ॥

कस्यचित्कवचं स्रस्तं व्यस्तायां च शरैस्त्वचि ।
शौर्यमन्तर्गतं व्यक्तमासीदन्तस्ततस्तत ॥ ६८ ॥

मनृत्तेषु कबन्धेषु रणतूर्यरवैर्नवैः ।
ध्वाताः स्खलज्जलैर्वीराः सुरस्त्रीरूप्येमिरे ॥ ६९ ॥

असृक्कणकिरः कुम्भिमु(म)द्दामोदस्य दस्यवः ।
श्रान्तैः सिषेविरे वीरै रणाङ्गणसमीरणा ॥ ७० ॥

१. 'तद्दो' ख. २. 'मि' ख.

सत्काव्यसदृशैरश्वैः सेनामुखमशोभत ॥ २५ ॥

(त्रिभिः कुलकम्)

गन्धर्वैरिव गन्धर्वैः सुखं लीनैरलंकृता ।
सुमेरुभूरिवाभूत्सा ध्वजिनी देवताश्रिता ॥ २६ ॥
मान्त्रिकैरिव विक्रान्तैः कृतास्त्रकवचक्रियैः ।
उपास्यते स्म विश्वेषामुपास्या परमेश्वरी ॥ २७ ॥
बभूवुर्भवकान्तायाः सध्वजाः स्यन्दनाः पुरः ।
यच्चक्रध्वनयश्चक्रु[1]र्ध्वजाः केकिनां मुदम् ॥ २८ ॥
धृतशूलार्धचन्द्रं तत्स[2]क्ष्वेडं नागसंगतम् ।
पार्वतीप्रीतये सैन्यं रौद्रं[3] रि(व)पुरिवाभवत् ॥ २९ ॥
उदस्थादथ तत्सैन्यभेरीध्वनिरनिह्नुतः ।
प्रतिशब्दापदेशेन यः शैलैरनुमोदितः ॥ ३० ॥
गजेन्द्रभूषि(बृंहि)तैर्वाजिन्हेषाभिर्भटभाषितैः ।
चक्रिसंक्रीडितैश्चाभूत्तत्रोच्चैः स्वरसंकरः ॥ ३१ ॥
सैन्यस्याह्वयमानस्य ताम्रा(मा)नकरवैर्द्विषाम् ।
प्रतिवापं ददौ चापज्यानिर्घोषैरुमा चै भूः ॥ ३२ ॥
प्रचलद्भ्यामनीकाभ्यां ताभ्यामुत्थापितं मिथः ।
नियुद्धं विदधे व्योम्नि रुषेवास्तक्षमं रजः ॥ ३३ ॥
दुर्जये दानवानीके देव्यनीके च जित्वरे ।
भयं जयं च चेतांसि व्यभापन्त नमःसदाम् ॥ ३४ ॥
सलीलं पश्यता रागादागच्छन्तीं द्विपच्चमूम् ।
[6]वीर्योद्रिक्तेन तेन द्राग्बलेनाभीकतादधे ॥ ३५ ॥
तस्य दानवसैन्यस्य भवानीमभिसर्पतः ।
प्रतिकूलानिलोद्भूता धूलिरेवाभवन्मुखे ॥ ३६ ॥

---

१. मार्गजाः. २. सिंहनादम्, विष च. ३. भयानकम्. ४. 'चमूः' क. ५. द्वेषात्, अनुरागाच्च. ६. शौर्यम्, शुक्र च. ७. कार्यारम्भे, वधे च.

व्योम्नीव विपुले तस्मिन्सैन्ये शूरविराजिते ।
निजतेजोविशेषेण तद्भौ मातृमण्डलम् ॥ ३७ ॥
आगस्त्यिन्यासुरेऽनीके समीपमुपसर्पति ।
सभ्रूभङ्गेव सेनाभूत्साधिज्यैः कार्मुकैः क्रुधा ॥ ३८ ॥
क्षत्तानपायि गृध्राणां पक्षैरुपरिपातिनाम् ।
पुरंदररिपूणां सा विच्छायैवाभवच्चमूः ॥ ३९ ॥
कन्दलोद्गतिहेतुः सा चमूः प्रावृडिव द्विषाम् ।
संभिन्ना सेनया देव्याः शरदेवोत्तशाणया ॥ ४० ॥
यानकण्ठीरवक्रोधादकुण्ठैः कण्ठगर्जितैः ।
दानवानीकनागानां न्यासिषेध मदश्रुतिम् ॥ ४१ ॥
देव्याः सर्वेऽपि ते वीराः परमे कोविदा रणे ।
ऐवीरः करिणां सिंहः परमेको विदारणे ॥ ४२ ॥
स्फुरद्रजस्तमोभावे प्रसृते क्रोधदुर्धरे ।
पीड्यमानेषु घर्मेषु प्रावर्तत ततः कलिः ॥ ४३ ॥
संरम्भिणो रणारम्भे दृष्ट्वा स्वं ददतो भटान् ।
दानेच्छैर्नियतं कोशः खड्गैरप्युदसृज्यत ॥ ४४ ॥
कोशानिव इवोज्झद्भिः कृपाणैः प्रत्ययैरिव ।
साधुप्रकृतिभिर्धीरैः साधिता समरक्रिया ॥ ४५ ॥
परस्परं जिघांसूनां तैस्तैः शस्त्रैरुपस्कृतः ।
ऋत्विजामिव वीराणां सोऽभूत्संगरसंभवः ॥ ४६ ॥
त्यक्त्वा स्थितोऽत्र यः शैलसमयोधवलो दयाम् ।
सोऽगात्कीर्तिं कृतक्षत्रसमयो धवलोदयाम् ॥ ४७ ॥

---

१. नक्षत्रविशेषश्च. २ कलहाङ्कुरश्च ३ वृक्षविशेषश्च ४. 'ण' त्व. ५. युद्धम्, युग च. ६. आत्मानम्, द्रव्य च. ७ खण्डनम्; वितरण च ८ मन्त्रविशेषैश्च ९. इष्टि-विशेष', स च मिथो विद्विष्टयोर्यजमानयोर्भवति १०. निष्कम्पवाच्छैलसम योधाना बल यस्य. ११. न्याययोद्धा.

यावत्त्वं सलिलासारैर्जगज्जीवयसि प्रभो ।
तावदेषा धृतोत्कर्षा कर्मठा धर्मकर्मसु ॥ ७१ ॥
रङ्गादाममदागारं गात्रमाक्षक्षमात्रगाः ।
दा मासाररसामादामक्षरक्ष क्षर क्षमः ॥ ७२ ॥

(सर्वतोभद्रम्)

तोयधारामरातीषु भिन्नं मां प्रति संप्रति ।
इति चातकवत्कोऽपि ययाचेऽब्दमुदन्यया ॥ ७३ ॥

(त्रिभिः कुलकम्)

कोकिलालककोलालिकुलकालाः किलाललुः ।
काकाः कङ्कालकीलालं कलाकलकुलाकुले ॥ ७४ ॥

(द्व्यक्षरः)

उत्तस्थाते विलोक्याथ तारुण्यं तद्रणश्रियः ।
दर्पकोपचितौ चण्डमुण्डावुपबुभुक्षया ॥ ७५ ॥
प्रजोपप्लावकावेतौ दुर्भिक्षमरकाविव ।
देवीसैन्योपघाताय प्रावर्तेतां कृतोद्यमौ ॥ ७६ ॥
द्वयेन स्फुरता तेन दैत्ययोर्जिह्वयोरिव ।
सैन्यस्य पन्नगस्येव मुखमासीद्भयंकरम् ॥ ७७ ॥
ततः शैलभुवो भालात्कालायसमलीमसा ।
धूमरेखेव रोषाग्नेरुदगात्काचिदङ्गना ॥ ७८ ॥
प्रवीणा युयुधे यत्र सा देवी रोपधारणे ।
तत्राभूज्जातमातङ्गसादे वीरोपधारणे ॥ ७९ ॥

---

१. कश्चित्प्रहारार्तो मेघं ययाचे—हे मेघ, यावत्त्वं जलैर्जगज्जीवयसि तावदेषा गात्रमा अङ्गश्री कर्मठा । पुनः किम् । रङ्गे युद्धभूमौ आदाम उच्छृङ्खलस्याहङ्कारस्यागारं स्थानम् । पुनः किम् । अक्षाणीन्द्रियाणि क्षिण्वन्ति हिंसन्ति इत्यक्षक्षाः शस्त्रप्रहारास्तन्मात्रेणापि गच्छति विनश्यति । एवंविधापि तव प्रमादात्सर्वकार्यक्षमा भवतीत्यर्थः । हे मेघ, आसाररसां धारां मा दा मा स्म देहि । किं तु आदीयते इत्यादामस्तादृशः अक्षरक्ष न्यायपालकः—। पुनः क्षमः समर्थः । समर्थो हि याच्यत इत्यर्थः. २. 'सर्व' क. ३. आददिरे. ४. अस्थिरुधिरम्. ५. गर्वक्रोधान्वितौ, मामसयुक्तौ च.

सामगा जयभावेन राकाभाशु रता महे ।
हेमतारशुभाकारा न वेभाय जगाम सा ॥ ८० ॥

(प्रतिलोमानुलोमश्लोकः)

दैत्यौ सङ्गरकान्तारे वीरव्यामाश्रिते स्थितौ ।
निर्जघान घनोद्योता सा विशुदिव पादपौ ॥ ८१ ॥
चण्डतुण्डभिदादक्षः कृतपुष्करसंगतिः ।
सदारामरुचिर्दैव्याः खड्गः शुक इवाबभौ ॥ ८२ ॥

(अर्धचतुष्टयवाची)

कल्पान्तवातकल्पेन रक्तबीजेन तत्क्षणात् ।
निष्पत्रा कर्तुमारेभे देवीसेना प्रतानिनी ॥ ८३ ॥
देवीमूर्तिषु सर्वासु पूर्वं रक्तरुचिर्दृशः ।
स चिक्षेप सुतीक्ष्णान्तास्ततः सायकसंततीः ॥ ८४ ॥
दिशो दशापि निशितैरपिधाय शिलीमुखैः ।
स चचाल दुराचारो गिरिराजसुतामभि ॥ ८५ ॥

(असंयोगः)

देव्या प्रत्यभियुक्तोऽसौ महेभासितयानया ।
नाराचैः प्रहरन्नाजिमहे भासितया नया ॥ ८६ ॥
देवता देवताराति तैर्मङ्गैः संगता शुभैः ।
छेत्तुमुच्छेयमुद्येमुः संसारं श्रुतयो यथा ॥ ८७ ॥

---

१. सामगा प्रियरदा, श्रीपक्षे न पदत्रयादिनीलर्थः. २. जयभावेन जयाभिप्रायेण. ३. राकाभा पूर्णमासीवद्भाति सुरचन्द्रेण. ४. प्रभावाद्युद्दोत्सवे. ५. सुवर्णरजतोज्ज्वलमूर्तिः. ६. न वैभाय गजभयाय. ७ सा देवी. ८ शुकपक्षे—चण्डदैत्यस्य तुण्डभिदायां दक्षः, पुष्करेण पत्रफलेन, रामरुचिः श्यामदीप्तिः । वीरपक्षे—चण्डेन तीक्ष्णेन तुण्डेन भिदायां दक्षः, गति शोभने चारामे रुचिर्यस्य । रावणमन्त्रिपक्षे—चण्डं कोपनं मुखं यस्य, भिदायामुपजापे दक्षः स चासौ भिदा दक्षश्च, कृता [illegible] पुष्करसंगतयो मुनयो येन, स [illegible], सति [illegible] दा स चासौ रामरुचिश्च, रावणसख्यत्वात् । वैष्णवपक्षे—चण्डतुण्डानां राक्षसानां भिदायां दक्षः [illegible], पुष्करेण नीलेन, रामे दाशरथौ रुचिरिच्छा यस्य, वैष्णवत्वात्. ९. अतिव्यसनम्, पत्ररहितं च. १०. रक्ता, [illegible] च ११. [illegible], [illegible].

नादवन्तमहीरावा धावधावर्मराक्षसा ।
भामहेलनतायासा माया सार तैतागसम् ॥ ८८ ॥

(प्रातिलोम्येनार्थान्तरश्लोकः)

संगता तरसा यामा सा यातानलहेमभा ।
सांक्षरामवधावन्धा वाराही मतवन्दना ॥ ८९ ॥
यानपञ्चाननोऽप्युच्चैर्मदेनाविदितव्यथम् ।
दैत्येभमभिदन्मूर्ध्नि निशितैर्नखराङ्कुशैः ॥ ९० ॥
अजरोरगराजोरःकम्पिभिः सगणं शरैः ।
प्रजहार दुराकारः सोऽपि केसरिणं खरैः ॥ ९१ ॥

(गोमूत्रिकाबन्धः)

तथा प्रावृषि कीलाले दानवापघनैर्घनैः ।
वीरक्षेत्रे यथा तसिक्तुर्जग्मुरसुराङ्कुराः ॥ ९२ ॥
वीरक्षेत्रे तदुद्भूतैर्बहुधान्यैरुपस्कृते ।
सानन्दं व्यचरन्नेता माहेश्वर्य इव मातरः ॥ ९३ ॥
बहुजग्ने स देवीभिर्बहु तच्छोणितैः श्रुतम् ।
बहु युद्धं नृभिः स्त(स)ज्जैर्बहुमीतं च नाकिभिः ॥ ९४ ॥
रेरे रुरोरुरूरूरोररेरिरिरारसै ।
रैरी रीराररारीरारूरीरीरोऽरुरार रुक् ॥ ९५ ॥

(एकाक्षरः)

---

१, दैत्य रक्तबीजम्. २: ओ विष्णुर्हार ईश्वरस्त्वावष्यवतीति. ३. धाविरवा धावित्वा. ४. न विद्यते राक्षसो भयदायी यस्याः सा. ५. भामस्य कोपस्य हेलोऽनादरस्तेन नतो गत आयासो यस्याः सा । कोपाभावादायासाभाव इत्यर्थः. ६. सा माया मायारूपिणी, आर जगाम. ७. कृतापराधम्. ८. यातीति यामा. मनिन् प्रत्ययः । संमामगामिनीत्यर्थः. ९. यातानल वह्निशुद्ध यद्धेम सुवर्णं तद्वद्भा यस्याः. १०. वैवस्यरहिता । मुक्तिदायिनीत्यर्थः. ११. आमवधे रोगध्वंसे आवन्ध आग्रहो यस्याः सा । तथा हि—'रोगानशेषानपहंसि—' इति सप्तशती. १२. दैत्यमेवेभं हस्तिनम्. १३. देवोरगमनुष्यकम्पिभिः. १४. 'ज्या' क.

अस्त्रघातानियं दैत्ये तदेनं विद्धि पातिनम् ।
इत्याचचक्षिरेऽन्योन्य रणे लब्धक्षणा गणाः ॥ ९६ ॥

(युग्मम्)

अथ व्यथयितुस्तस्य चामुण्डा रुधिरं पपौ ।
प्रभावमप्रयत्नेन व्याधेरिव महौषधी ॥ ९७ ॥

स्वसंभूतेषु दैत्येषु तेषु कर्मस्विव क्षणात् ।
परिक्षीणेषु निर्वाणं तस्य योगविदोऽभवत् ॥ ९८ ॥

सैन्य तदिति पार्वत्याः परिताप्य भुजोष्मणा ।
विखण्डितशिराः शीघ्रं पपात दितिजो भुवि ॥ ९९ ॥

(गूढचतुर्थपादः)

सहसा सैनिकैर्नष्टं देवारीणामदंशितैः ।
सुराः प्रापुश्च तद्धसादेर्वारीणा मद शितैः ॥ १०० ॥

रक्तबीजवियुक्तायाः पताकिन्याः सुरद्विषाम् ।
यदभूदंङ्गभूः कम्पस्तदेतन्महदद्भुतम् ॥ १०१ ॥

अथायष्टम्भयन्नुच्चैर्वच स्तम्भेन गङ्गिनीम् ।
तामेतामात्मनः सेना निशुम्भो योद्धुमभ्यगात् ॥ १०२ ॥

चिराधिगतकालेन नीलः कालेन निश्चितम् ।
सोऽरण्यानीं यथा चण्डीं चण्डकेसरिकेतनाम् ॥ १०३ ॥

(निरोष्ठ्यः)

न तस्यां दैत्यदावस्य प्रातिभं प्रापि हेतिभिः ।
तत्रायं निश्चितो हेतुर्यत्सा प्रालेयशैलभूः ॥ १०४ ॥

---

१. आनीत. २. धर्मंभयात्मोक्ष ३. मृत्यु, मोक्षश्च ४. योग संनहनोपाय, चित्त वृत्तिनिरोधश्च ५ अकवचं ६ भगिनी ७ दानिरोध, पुत्रश्च ८. मृत्युना. ९. प्रागल्भ्यम् १० दन्तिगर्भादिभि. ११. मुक्ता, शिशिर न हिमभूमौ वह्निज्वाला प्रभवति

द्वन्द्वे बलानि सा भेजे द्वेधा भूतान्विता शुभे ।
बभूव वैधपातासा तालावगतधन्विमि(नि) ॥ १०५ ॥
(अर्धभ्रमः)

असिपत्रं वहन्व्याप्तं पुष्कलैः पुष्कला(ल्का)ङ्कुरैः ।
मृत्युदूत इवादर्शि तेन शैलात्मजाभुजः ॥ १०६ ॥
ययुयायी ययौ योऽयं ततातातीत तात तम् ।
पापोपपापपापापि नुन्ना नानानना न न ॥ १०७ ॥
(एकाक्षरपादः)

इति संतोषयामास पार्वतीविक्रमं वदन् ।
विकासिचदनेन्दुश्रीर्मैनाको नगनायकम् ॥ १०८ ॥
(युग्मम्)

तस्योद्दण्डस्य चामुण्डाखड्गदण्डविखण्डितम् ।
पपात मस्तकं भूमौ भौमलोहितलोचनम् ॥ १०९ ॥
नयैर्धिना शितं नेत्रा सकलं वैरभावितैः ।
नयैर्विनाशितं नेत्रा सकलम्बैरभावि तैः ॥ ११० ॥
(समुद्गकबन्धः)

शयो यः स्त्रीस्थितस्तस्याः पुरतः प्रकृतेरिव ।
प्रापे क्षिप्रत्ययेनेव तेन तूर्णमदर्शनम् ॥ १११ ॥
नष्टे दुष्टे हते दैत्यविभावसुरसेनया ।
स्त्री स्थिता सानुगम्री तं विभावसुरसेन या ॥ ११२ ॥
महोदयाशौ चरतः सूर्याचन्द्रमसौ तदा ।
महोदयाशौचरतः समलुप्यद्दपिव्रजः ॥ ११३ ॥
नागाग्निरापत्परमं विकारं नागाग्निरापत्परमं विकारम् ।
सहस्रतेजो रुरुचे हतेन सहस्रतेजोऽरुरुचेह तेन ॥ ११४ ॥
(संपुटयमकम्)

---

१-युद्धे. २ भूतेषु प्राणिषु स्वरूपेऽन्विता, भूतैश्च पिशाचादिभिः. ३. यत्पात विनाशागममस्यति क्षिपति, अमरत्वात् । क्विभूते युद्धे । तालावगतधन्विनि तालाः स्वीकृता अवगता प्रसिद्धपराक्रमा धन्विनो योधा यत्र. ४. 'क्षरं.' स्त.

फेरुण्डैर्दशनविनाशिताश्वतुण्डैः
काकोलैर्दलितमहेभमांसलोलैः ।
झोटिङ्गैर्घटितभटोत्कटोपलिङ्गै-
र्वेतालैरपि मुमुदेऽत्र साश्रमालैः ॥ ११९ ॥

इति श्रीगुर्जरेश्वरपुरोहितश्रीसोमेश्वरदेवविरचिते सुरथोत्सवनाम्नि महाकाव्ये युद्धवर्णनो नाम दशमः सर्गः ।

---

एकादश. सर्गः ।

वीक्ष्य विक्षतमिति स्वमनीकं नायकः स किल नाकिरिपूणाम् ।
कोपसंपदपसारितक्षामस्तामवि(धि)ज्यधनुरेत्य रुरोध ॥ १ ॥
वासरेश्वरकराङ्कुरकान्तेः काञ्चनस्य कवचस्य मिषेण ।
दानवः स वपुरन्तरमान्तं रोषरोहितहयं वहति स्म ॥ २ ॥
उत्कटभ्रुकुटिला(भा)लकरालं दारुणारुणविलोचनमेषः ।
आननं दधदध.कृतविश्वो नश्वरं न समरे कमकार्षीत् ॥ ३ ॥
सिंहनादमकरोदथ मन्थक्षुभ्यदब्धिरवदुःश्रवमेषः ।
यं निशम्य शमितामितदानस्रोतसं सुरगजैरुदवेजि ॥ ४ ॥
तस्य रोषरचिताशुगवृष्टेर्दृष्टिपातचकितैर्गगनाग्रात् ।
निर्जरैरगणितत्रपमाशु स्त्रीगणस्य पुरतोऽपि पलायि ॥ ५ ॥
कोपकम्पितरदच्छदमेष विक्षिपन्निपुततीरतितीक्ष्णाः ।
सीत्वमङ्गमृदुतां च तदीयां निर्घृणो गणयति स्म न किंचित् ॥ ६ ॥
पत्रिभिस्त्रिभुवनारिविमुक्तैर्न व्यथां हृदयमाप तथास्याः ।
तस्य पूर्वरचितैरपराधैरिद्धकष्टमजनिष्ट यथा तत् ॥ ७ ॥
कार्मुकं सविशिखं सपताकं केतनं रथवरं च सरथ्यम् ।
सापि तापितजगत्रितयस्य द्रागदारयदरेः प्रदरेण ॥ ८ ॥
एक एव बहवो वयमेताः संयतीह तदसांप्रतमेतत् ।
इत्यवेत्य गिरिराजसुताया मूर्तयः प्रविविशुर्द्रुतमन्याः ॥ ९ ॥

---

१. कोपानलम्.　२. प्रभुरोदम्　३. इक्षेण.

शक्तिपाणिजननीं प्रति शक्तिं यावदैहैत स हन्त विमोक्तुम् ।
तावदाशु निशितेषुभिरेषा तां द्विधा युधि चकार करस्थाम् ॥ १० ॥
युद्धबन्धुमसिदण्डमखण्डक्रोधबोधितमदोऽयमुदस्य ।
अभ्यधावदवधीरितकुन्तव्रातघातरुजमाजिमुखे ताम् ॥ ११ ॥
तस्य खण्डितमखण्डितशक्त्या सङ्गरे गिरिजया करवालम् ।
तीक्ष्णतां मलिनतां च दधानं मन्वते स्म हृदिव त्रिदिवस्थाः ॥ १२ ॥
तद्वधाय विधुतोर्द्धतपक्षं चैक्रमुत्क्षिपति स स्म विपक्षः ।
इन्दुमूर्तिरिव नावललम्बे तेन सा विर्घटितप्रमदेन ॥ १३ ॥
सर्वमप्यथ वपुर्व्यथयन्ती विद्विषः पैरिगृहीतगदस्य ।
पञ्चसायकविरोधिपुरन्ध्रीपञ्चता स्वयमवाप समीपम् ॥ १४ ॥
मायिकोऽयमुमया सह मायायु(यु)द्धमुद्धततरः कुरुते स्म ।
सा किल स्वयमसाविति भूयस्तत्र शत्रुजनतः प्रजगल्भे ॥ १५ ॥
तां विधाय निजमूर्तिमदृश्यामिक्षक्षः(तः) किल परः स बभूव ।
सर्वतोऽप्यविहतैरिह निम्नन्नम्बिकाशरशतैः क्षत एव ॥ १६ ॥
कुञ्जरारिदयिता मृदुमूर्तिः कुञ्जराकृतिभृता दितिजेन ।
तैंचकार समरं स जगाहे येन विस्मयमयः कठिनोऽपि ॥ १७ ॥
सा कुतः श्रयतु संयति भीतिं शत्रुतः कृतमृगाधिपरूपात् ।
दुर्दमं तमपि केसरिराजं या निरन्तरमधः कुरुते स्म ॥ १८ ॥
पौरुषं पुनरवाप्य स रूपं यूपतुल्यवपुषां भुजगानाम् ।
अस्त्रमसरदथ स्मरजेतुस्तां विजेतुमबलामविलम्बात् ॥ १९ ॥
उल्लसद्भिरभितः कृतभूपं भीषणैर्भुजगराजसमाजैः ।
बिभ्रदभ्रसरितं वैसुमूर्तेर्मूर्तिरम्बरमिति स्फुटमासीत् ॥ २० ॥

---

१. स्कन्दमातरम्. २. अचिन्तयन्. ३. हृदयमिव खण्डितम्. ४. दलितारिवर्गम्. ५. आयुधविशेषम्, चक्रवाकं च. ६. गतहर्षेण, विगतकलत्रेण च. ७. सायुधस्य, सरोगस्य च. ८. इन्द्रियेभ्यः परोऽगोचरो बभूव सः, अथ च यः शिलाक्षतः स पथ क्षतो भवतीति विरोध. ९. अस्खलितं'. १०. 'स' ख. ११. अष्टमूर्ते..

निन्दितद्रुमणिकागुरुवेणिश्रेणिभिः फणिगणैर्मणिमद्भिः ।
रोचते क्वचिता स समन्तादम्बुदैः स्थिरतडिद्भिरिव द्यौः ॥ २१ ॥
निर्मितार्ककिरणप्रतिबन्धैरन्धकारितमहीन्द्रसहस्रैः ।
तत्फणामणिगणैः कृतदीपालोकमोक इव पुष्करमासीत् ॥ २२ ॥
कोटिभिर्विघटितः स्मरवैरीस्त्रीस्मृतागतपतङ्गपतीनाम् ।
अद्रवद्द्रुतमुपद्रुतलोकः काद्रवेयनिवहो वियदग्रात् ॥ २३ ॥
स्वर्गिवर्गहृदयाहितशङ्कः शङ्करप्रणयिनीं प्रतिहन्तुम् ।
वारुणास्त्रमरिवारणशुण्डादण्डखण्डनपरः प्रणिदध्यौ ॥ २४ ॥
पर्वतैरिव युगान्तसमीरप्रेरितैरभिनभः प्रसरद्भिः ।
वारिवाहनिवहैर्नवहालाश्यामलैर्मलिनिताः ककुबन्ताः ॥ २५ ॥
उल्ल(ज्ज्व)लं कलयतः करवालं व्याकृतस्फुरितलम्पटशम्पः ।
कज्जलाचलनिभादसिताभः शुम्भतः स विभिदे न घनौघः ॥ २६ ॥
गर्जितर्जितहरित्करिकर्णश्चूर्णयद्भिरचलानपि तूर्णम् ।
तोयदैरदयवृष्टिविशिष्टैर्विष्टपत्रयमनीयत कष्टम् ॥ २७ ॥
वीक्ष्य तद्विलसितं जलदानां दानवेन्द्रविहितं हतभीतिः ।
सा चकार मुखमारुतपातैरायतैरपगतप्रसरांस्तान् ॥ २८ ॥
आजुहाव हतबुद्धिरयं यद्दर्शिताद्भुतमतङ्गजमस्त्रम् ।
तन्निराकृत तदासनसिंहो बृंहितप्रतिहतान्यतिनादम् ॥ २९ ॥
यत्पदेत्य कृतयानवदानं दानवस्तदफलं विदधे सा ।
साधनानि सुबहून्यपि हन्त व्यर्थतां दधति धातरि वक्रे ॥ ३० ॥
बाहुयुद्धमयमुद्धतबाहुः कर्तुमारभत भूधरपुष्पा ।
संपरायपटुना सुभटानां शस्त्रसैन्यविरहेऽपि हि सैव ॥ ३१ ॥
आपतन्तमियमुद्घनमुष्टिं बाहुना हृदि जघान भवानी ।
सोऽपि कन्दुकवदेत्य धरित्रीमुज्जगाम पुनरेव जवेन ॥ ३२ ॥
मद्विहाय धरणिं रणमेषा व्योममार्गेण सह तेन वितेने ।
तन्मेनिजरिपुप्रजनानुविक्रमोऽपि गगनानतिभूमिन् ॥ ३३ ॥

---

१. 'द' ग्र.　२ [illegible]

स्त्रीयुधः प्रथममेव विदीर्णे मानिनोऽस्य यदपत्रपयैव।
तत्र पातितवती हृदि शूलं शूलपाणिरमणीयमणीयः ॥ ३४ ॥
निर्दयं हृदि हतो भुवि पश्चान्निर्गतासुरसुरः पतितोऽसौ।
पुष्पवृष्टिरमरैस्तु विसृष्टा पार्वतीशिरसि पूर्वमपप्तत् ॥ ३५ ॥
संमदोद्गमलसद्ववाग्निर्नाकनायकपुरप्रमदाभिः।
चिक्षिपे कुसुमजातमजातम्लानि बाष्पजलसीकरसेकात् ॥ ३६ ॥
दिव्यदुन्दुभिरवैरमराणामङ्गना विगलितागमनृत्यन्।
विष्टपानि निखिलानि तु चित्रैः पार्वतीविहितसंमदमत्तैः ॥ ३७ ॥
उच्छ्वसत्कुचमुरो मुखमीषत्स्वेदबिन्दुविसरं च वहन्त्याः।
पञ्चबाणहरणप्रणयिन्या व्यक्तिमाप समरश्रमलक्ष्मीः ॥ ३८ ॥
शस्त्रकर्म किमपि प्रथयन्त्या दुर्गया द्विषि हते व्यथकेऽस्मिन्।
विष्टपत्रितयमुद्धतशल्यं कल्पतामिव जगाम जवेन ॥ ३९ ॥
स्वामिना विरहितं रहितं च व्रीडया परिचितं तु भियोच्चैः।
जीवशेषमथ शेषनिवासे वासवारिबलमाशु विवेश ॥ ४० ॥
त्रासितं सपदि तन्नगपुत्र्या भीरनीकमपसारयति स्म।
स्त्रीकृते परिभवे हि भवेत्स्त्री केवलं बलवतोऽप्यवलम्बः ॥ ४१ ॥
लोचनानि हृदयानि मुखानि प्रोल्लसन्ति दधतः प्रमदेन।
नाकिनः प्रति पिनाकिकलत्रं सूत्रिताञ्जलि बलिं ददति स्म ॥ ४२ ॥
हर्षबाष्पजलबद्धगलत्वात्तच्चरित्रमुरु वक्तुमशक्ताः।
केवलं पुलकपल्लविताङ्गास्तां प्रणेमुरमराः समरान्ते ॥ ४३ ॥
सप्रसादवदना मदनारिप्रेयसी प्रणमतः पुरतस्तान्।
राज्यसंपदि नियुज्य निजायां जायते स्म नयनानुपलभ्या ॥ ४४ ॥

रविरविप्लुतमण्डलमण्डितः सितकरः समदावसरस्तदा।
मरुदरूक्षतरश्च हुताशनः कनकसंनिभरोचिररोचत ॥ ४५ ॥

अरिपरिभवक्लिष्टं स्पष्टं पुनः प्रमदामृते-
र्षयदधरितत्रासोल्लासं मनः सुमनःप्रभुः।

---

१. तीक्ष्णम्. २. पाताले.

चिरविरहितानङ्गैरङ्गैर्जगत्रितयश्रिया
झटिति घटिताश्लेषः शेषं सुरौघमतोषयत् ॥ ४१ ॥

इति श्रीगुर्जरेश्वरपुरोहितश्रीसोमेश्वरदेवविरचिते सुरथोत्सवनाम्नि महाकाव्ये
शुम्भवधो नामैकादश: सर्गः ।

---

द्वादशः सर्गः ।

श्रुत्वैवं श्रवणसुखं मखारिपत्नीमाहात्म्यं मुनिमुखतः क्षितीन्दुरेषः ।
तत्पादौ परिचरितुं चकार चित्तं चिन्तापि स्फुरति शुभागमे शुभैव ॥ १ ॥
ताम्रौष्ठद्युतिशबलैः सिताशुलेशैः संस्कुर्वन्सकिशलयैः सुमैरिवाशाः ।
प्रोवाच प्रियवचनो मनोज्ञवाचं तं वाचंयममयतात्मनां नियन्ता ॥ २ ॥
संवृण्वन्नपि विपुला विभूतिमन्तः कारुण्यं मयि नियतं विधिर्विधत्ते ।
दुर्यानं गैहनमुपागतस्य यो मे त्वां मार्गे प्रियमिव दर्शयांचकार ॥ ३ ॥
मां गम्यां सुकृतशतैर्महीमिमां यः कर्मार्द्रिन् (?) दिवमपरामिवानिनाय ।
गन्ता त्वद्वचनरसायनेन जाने पीनत्वं मम पुनरेष पुण्यशेषः ॥ ४ ॥
पुत्रान्तःपुरविरहानलातुरं यत्र प्रीतिं क्वचन मनागपि प्रपेदे ।
मच्चेतस्तदिदमिमामपास्यदर्तिं नर्नर्ति त्वदधिगमप्रमोदमत्तम् ॥ ५ ॥
वात्सल्यं जनक इव स्वयं जनेऽस्मिन्पुष्णासि प्रकृतिरियं महीयसां हि ।
शुश्रूषे तदपि विधेर्वृ(धि वृ)षाङ्कजायापूजायाः कथय स नास्ति चेदवाच्यः॥६
इत्युक्ते नरपतिनाथ योगिनाथः सोऽयं तद्विनयविशेषितार्द्रभावः ।
दन्तांशुप्रसवपरिष्कृताग्रमार्गां बह्वर्थामबहुपदामुवाच वाचम् ॥ ७ ॥
मा वादीरनुचितमेवमात्मवृत्तेः सद्वृत्ते त्वयि मम यत्किमस्त्यकथ्यम् ।
विद्यापि क्षितिप फलानुबन्धिनी नः स्थानोप्ता भवति भवादृशामिव श्रीः॥८
दुर्दैवादजनि दशेयमीदृशी चेत्पात्रत्वं गतमियतैव तावकं किम् ।
जात्यानां न हि महिमापयाति पांसुव्यासङ्गव्यवहिततेजसा मणीनाम्॥९॥

---

१. निजनिजव्यापारगमर्पणेन　२. 'राङ्कुर्वन् राङ्कुगुमै.' स्त.　३. वन कष्ट च.
४ (?) तपोधन.　५ परिहरन्तात.

पुष्यस्थे शशिनि सुपर्वपूज्यवारे पूर्णायामुपचितचन्द्रिके च पक्षे ।
व्याचख्यावुपनिषदं जगज्जनन्याः सम्राजे स मुनिरनन्यमानसाय ॥ १० ॥
मन्त्राणामसुलभवैभवैकसत्यं कारुण्यं श्रवणपथप्रवेशतोऽपि ।
आसन्न(न्ना)मवसितिमात्मकर्मखानां मन्वानं मुनिरयमन्वशान्नरेन्द्रम्॥११
एतस्याः क्षितिधरकाननस्रवन्त्याः कूलेऽस्मिन्नखिलतपोधनानुकूले ।
स्रोतांसि प्रकृतिचलानि संनियच्छन्नेतत्त्वं परिचरितुं त्वरस्व तत्त्वम्॥१२॥
न ध्यानाप्लवनजपोपवासजेन क्लेशेन क्षितिप तपः समापनीयम् ।
यत्कृत्येष्वपि विषयेष्वखिद्यमानैर्मान्यन्ते मुदितविपन्दि मङ्गलानि ॥ १३ ॥
आलम्बो महति निमज्जतामपाये भावानामविशदवर्तिनां प्रदीपः ।
सिद्धीनां सदनमिदं च दुर्लभानां किं वा तन्नृप तपसा न साध्यते यत्१४
एतेन त्वमघममोघकर्मणा स्वं भीत्सीष्टाश्चटुलमिदं मनो नियम्य ।
अक्षाणां विषयनिषेवणोल्बणानामेतद्धि प्रथयति पूर्वरङ्गमङ्ग ॥ १५ ॥
कोऽपीयान्दमयितुमान्तरानरातीन्कल्पन्ते कृतमतयः कथंचिदेव ।
मुञ्चन्तं प्रतिपु विशेषतः पृषत्कान्पुष्पेषुं यदि विरला विलक्षयन्ति ॥ १६ ॥
न व्रीडां गणयति मन्यते न पीडां नातङ्कं वहति विलोकते न पङ्कम् ।
न ईर्कीर्तिं बहु मनुते न वेत्ति जातिं न श्रेयः फलयति चित्तभूविधेयः १७
तद्धीरीकृततरणो रणोद्धुराणां शत्रूणां सपदि पराभवं प्रदित्सुः ।
स(श)र्वाणीमभिलषितार्पणप्रवीणां प्रीणीयाः प्रणतपदां वदान्यदेवैः ॥१८॥
आशास्यं फलमुपलब्धुमुज्जिहीथाः पन्थानः सुरथ शिवा भवन्तु तुल्य(म्य)म् ।
प्रीत्यै नः प्रशमितकश्मलस्य चाशु व्यापृत्तिस्तव भवताद्रुपात्तसिद्धेः॥१९॥
इत्यार्षं वचनमनन्यचित्तवृत्तिः स्वीकुर्वन्नरपतिरानतेन मूर्ध्ना ।
आपृच्छ्य प्रथममम् मुनीनथान्यानुत्तस्थावभिमुखमाश्रमं स्रवन्त्याः ॥२०॥
मातृणामिव मुनियोषितां प्रणामप्रीतानां सविनयमाशिषः प्रयच्छन् ।
मांहेयीमभिमुखमायतीं महर्षेः प्रत्यक्षां श्रियमिव स व्यधादसव्ये ॥ २१ ॥

---

१. 'राणा' ग. २. 'कल्मषाणाम्' ग. ३. 'व' ग. ४. आसादितानि.
५. 'पार्दान्' ग. ६. 'स्का' ग. ७. 'र्मा' ग. ८. धेनुम्. ९. 'क्ष' ग.

आनन्दं न दवथुनाथ मारुतेन व्यस्ताम्भोरुहरजसा स राजहंसः ।
आरावैर्जलवयसामिवाह्वयन्त्या वाहिन्याः पुलिनमलंचकार चारु ॥ २२ ॥
उत्कूजत्कलकलहंससारसानां सारङ्गाकवलितकोमलाङ्कुराणाम् ।
सानन्दं मितसिकतावितानभाजामाभोगं पुलिनभुवां विलोकमानः ॥ २३ ॥
आलोक्य द्युतिमतिशायिनीं मुनीन्द्रैरासत्तेऽपि प्रसवफलाङ्कुरे तरूणाम् ।
पात्रेभ्यः प्रगुणितसंपदा कदापि श्रीमत्ता विरमति नेति मन्यमान्य ॥२४॥
अभ्यर्णद्रुमकुसुमाधिवासिताभिः शीताभिः शुचिभिरदूरसामिरद्भिः ।
तामर्णं पतिदयिता वितीर्णभद्रामद्राक्षीदयमपनिद्रनीरजाक्षः ॥ २५ ॥

(त्रिभिः कुलकम्)

स्थापत्यानिव पवनेन वेपमानान्पार्श्वस्थानतिवयसस्तरून्दधानाम् ।
तां दृष्ट्वा जलजमुखीं समुद्रजाया जायां सामपि विमना मनाक्स दध्यौ॥२६
थल्गन्ति(न्ती)मुपरि मधुमतालिमन्तःक्रीडन्त्या श्रिय इव वेणिमुद्दधाने. ।
साभिख्यापह्नतिरुषा सरोजखण्डैर्वेदेवागमदपरत्र नास्य दृष्टिः ॥ २७ ॥
शिशाम्भःकणमिषतो मुदश्रु मुञ्चन्नुत्कूजत्कुररस्वोक्तमान्तरवादः ।
उन्मीलत्पुलकमथु सरित्समीरस्नीरस्थ मुदादिव साधु पर्यरब्ध ॥ २८ ॥
सतोषसितमिव फेनमुद्दधाना सा सिन्धुर्नृपतिमुपागतं निरीक्ष्य ।
राजानामिव निर्वहैस्तटाहतोर्मिभ्रष्टाम्भःकणनिकरैस्समभ्यवर्षत् ॥ २९ ॥
गुन्यर्पोऽजलिरुभे कृतावभागामासाद्य प्रवणतरन्तरङ्गिणी ताम् ।
सश्रद्धागधिकतरा तपस्यकार्षीदुत्कर्षं श्रयति मनिः सदाश्रयेण ॥ ३० ॥
आहूय क्षितिपतिरप्पतिं ततोऽस्मै दत्वार्घं निरयजगाक्षनप्रसूने ।
नियानः सरिति गुरूपदिष्टनिष्ठानिष्णातः स तपसि मानस संगर्ज ॥ ३१ ॥
प्रागभ्रेरथ स सुधी कृतोपरेन मास्यापश्च्नुरनुपाम्बुपारचान्द ।
आरेभे निभृतजप स्वपरिवार्षसंगम्या विपुरविरोचनाम्बुनाम्याम् ॥ ३२ ॥
वन्यानामपि जनयन्नजस्रमन्तर्विश्रम्भं मुनिरिव शान्तवेष एषः ।
तेजोभिर्जगदतिवर्तिभिस्तुनाभलोकानां जनपदपत्रवीक्षणीय ॥ ३३ ॥

---

१ 'र्गाः' ख. २ 'नगर' ख.

स ध्यानस्तिमितमनाः स्थितः स्थिराङ्गं तुङ्गिम्ना तुलितसुपर्वपर्वतेन।
निष्कम्पध्वजवसनावनद्धपुण्यप्रासादश्रियमधिशिश्रियेऽधिकश्रीः॥ ३४॥
बिभ्राणस्त्रिपवणजन्मनां जटानामाभोगं जलजरजःकणारुणं सः।
बालार्कद्युतिकपिशाग्रपल्लवस्य प्रागल्भीमलभत सालपादपस्य॥ ३५॥
एकाङ्घ्रिप्रपदकृतास्पदस्य तस्य प्रत्यक्षे प्रहित(त)विलोचनद्वयस्य।
आम्भोजी करकमले चलाक्षमाला शारीरी जपनिपुणस्य तु स्थिरैव॥३६॥
यत्पूर्वे चिरचरितैस्तपोभिरापुर्माहात्म्यं मनसि महात्मनां मुनीनाम्।
स स्वल्पैरपि दिवसैरिदं प्रपेदे दुष्प्रापं किमपि मनस्विनां हि नास्ति॥ ३७॥
आत्मीयान्नियमकृशीकृतोऽपि सारादाचारादिव न खलु प्रचुच्युवे सः।
उज्ज्वालज्वलनविलीनकश्मलानां हेम्नां किं भवति कदाचिदर्घपातः॥ ३८॥
पुनरितरुपरि तपस्युपर्युपेऽह्नर्थेऽन्यानथ चतुरः स्थितोऽन्तरेण।
सानिध्यानि तिरयन्निवाग्निदीप्त्या दीप्तानामृतुमयमन्यगाद्दिनानाम्॥ ३९॥
प्रावृषि ... निस्तापेऽपि च विचरत्पयोधरत्वात्।
शीतेऽपि ... परिशोषणेष ... सामर्थ्यं हि प्रथममुशन्ति शान्तिचिह्नम्॥ ४०॥
निर्भीभवदभिपिपासयेव गर्जत्पर्जन्यप्रथितसुरेन्द्रचापखण्डम्।
धारा(रा)नुपरि शरानिव क्षरन्तं हंसानां पिशुनमनेहसं स सेवे॥ ४१॥
वल्गन्ती सजलवलाहके बलाका निष्काणः स च शिखिनां वनान्तवर्ती।
न क्षोभं हृदि विदधेऽस्य विक्रियायै नाविद्या विदुषि कदाचिदुज्जिहीते॥ ४२॥
कुर्वद्भिर्दिनरजनीकरप्रकाशव्यासेधं दवदहनानपह्नवानैः।
अम्भोदैरुपरि परिक्षरद्भिरम्भस्तत्(त्त)स्य व्रतजनितं जितं न तेजः॥४३॥
यः पूर्वं समजनि संमतः सितासु क्षिप्तेपुर्विषमशरः शरन्निशासु।
सोऽप्यस्यत्तमथ तथैव वर्तमानं को न स्यादनवसरे स्फुरन्निकार्यः॥ ४४॥
अङ्गानि ग्लपयति मारुते हिमर्तौ मर्त्येशः शिशिरतरैः सरित्तरङ्गैः।
न स्नानं दिवसमुखे मुमोच धीरो नारब्धं परिहरते हतोऽन्तरायैः॥ ४५॥

१. इन्द्रियमाला जपमाला च. २. शरीरे भवा. ३. '१' रा. ४. 'ह' रा.
५. राज्यावस्थायाम ६. निरानकार.

मन्दानां तरुणिरुचामिवोपचारं कुर्वाणः परमशमार्जितैर्महोभिः ।
सेहानो हिमसिमि(शिशि)रान्सवारिणासौ वल्केन व्यवहितविग्रहः सहस्ये ४६
क्रन्दन्तीः पतिविरहे रथाङ्गकान्ताश्चित्तेन प्रथितकृपेण वीक्षमाणः ।
वाहिन्यां तुहिनतिरोहिताम्बुजायां निन्येऽसौ तुहिनतपात्ययस्यरात्रीः ॥४७॥
भूतानां नवफलिका पिकाङ्गनानामोङ्कारस्तंतुहिमडिम्बमिन्दुबिम्बम् ।
तान्येतान्यविहितचित्तविक्रियाणि व्याचक्रुर्नृपतिमुनेर्यतेन्द्रियत्वम् ॥ ४८ ॥
यः खिन्नान्यपि हृदयानि दाक्षिणात्यैरुन्मादं गमयति मारुतैर्वसन्तः ।
तस्मिन्नप्यविकृत एष संहितेषुं पुष्पेषुं वितथमनोरथं चकार ॥ ४९ ॥
तेषानामिव तपसाष्टमो बुभूषुर्भूयिष्ठः स नृपमुनिर्विधेन्मुनीनाम् ।
निस्तन्द्रस्त्रिभुवनमातरं स्मरंस्तां वाताशी निरगमयद्बहून्यहानि ॥ ५० ॥
तद्विष्णोः पदमुपदीकृतं तपोभिस्तादृग्भिस्तृणवदयं ददर्श मानी ।
विद्विष्टैः कपटहृतां तु राज्यलक्ष्मीं त्याज्यामप्ययतत मा प्रहामहीतुम् ॥५१
इत्युर्वीपतिमतिरिच्यमानमुच्चैरस्वच्छीकृतशतमन्युभिस्तपोभिः ।
शर्वाणी तमवनगाम नामराणां ज्ञानाख्यं क्वन विहन्यते हि चक्षुः ॥ ५२
चित्तेन प्रणिदधताथ विष्णुमाया मायाभिर्मिकृत कृतत्रिलोकमोहम् ।
तद्धैर्यं तपसि परीक्षितुं परीक्षा निर्व्यूढः परिवृढसत्कृतेर्हि योद्धा ॥ ५३ ॥
दिक्चक्रं सकलमपि प्रकाशयन्तीमङ्गानां रुचिभिरनङ्गमङ्गलानाम् ।
माधुर्यो गुणमहति ध्वनेऽपि मर्गे तां दुर्गां प्रमदगद्गदं जगाद ॥ ५४ ॥
सुश्रोणि श्रवणपुटोपयोग्यवरीति श्रान्तात्मा सुरथ इति क्षितीन्दुरस्मि ।
सा यन्नित्यमनियमैरमनिवासे यामिष्टी निवसति गेहिनि प्रतिष्ठा ॥ ५५ ॥
साम्राज्यार्जुपमपराभवेन निष्ठानिष्ठाना पथि पथिशापमानमेनम् ।
भूमौ गिरिद्विभिरिव स्फुरद्भिरिमे प्रमाणि रारिलिनो निरगम्य त्वम् ॥ ५६ ॥
धर्मोपक्रमपनया गता यतीनां चित्तानि स्मरपरिहारदर्दमानि ।
सौन्दर्यावहतहृदा हि सुन्दरीणां चित्तानि त्वितगुणया मृदूभवन्ति ॥ ५७ ॥

१. प्रथम॰　२. [illegible]　३ 'इं' पा.　४ 'न' पा.　५ [illegible]
६. [illegible]　७ [illegible] ध्रियन्ते　८ '[illegible]' पा.　९. [illegible]
[illegible]　१० 'धं' पा.

गुण्यन्ते गुरुवचनानि तावदन्तश्चेतासि श्रुतिरपि संस्करोति तावत् ।
सेराम्भोरुहसदृशादृशा नियुक्तो नाधिज्यं धनुरतनुस्तनोति यावत् ॥ ९८ ॥
............................................स मधुसखो मधुर्विधाता ।
न ह्येकः प्रभवति कर्मठोऽपि कर्म व्याकर्तुं किमपि विना प्रतिष्कशेन ॥ ९९
इतीरिता गिरिसुतया घनस्तनी मनीषिणामपि जनितस्मरज्वरा ।
तपोध(व)नं तमभिचचाल जालकोपलक्षितक्षितिरुहरक्षितातपम् ॥ १० ॥
सम सखीसचिवजनै शनैरसौ-स्वसौष्ठवोपहसितनाकनायिका ।
अशिश्रियज्जघनभरार्जितश्रमा तमाश्रमं सुभगमभङ्गया श्रिया ॥ ११ ॥

इति श्रीगुर्जरेश्वरपुरोहितश्रीसोमेश्वरदेवविरचिते सुरथोत्सवनाम्नि महाकाव्ये सुरथतपोवर्णनो नाम द्वादश सर्ग ।

## त्रयोदश सर्ग ।

अथ द्रुमारोपितपल्लवश्री श्रीकण्ठकान्तानुमतो वसन्त ।
मित्रेण सार्कं मकरध्वजेन तपोधनाना वनमाजगाम ॥ १ ॥
उत्तस्थिवानाम्रवणस्थिताना कोलाहल कोकिलकामिनीनाम् ।
यो भावमुद्वासितवान्विरुद्धं समादधानेष्वपि मानसेषु ॥ २ ॥
विलोलयन्पादपपल्लवानि मनासि यूनामिव रागवन्ति ।
लुप्तस्मराज्ञेपु कृतोग्रदण्ड श्रीखण्डशैलादनिलश्चचाल ॥ ३ ॥
बभूव ताभिर्नवमञ्जरीभिश्चूत स्मराकूतविधावधृष्य ।
यास्तर्जयन्ति स्म समीरलोलाः प्रविष्टमाना न पुनर्भवाय ॥ ४ ॥
अथोष्णरश्मे. किरणैः कदुष्णैरजायत स्वेदजलोपलम्भः ।
माकन्दसेकश्रमपाटलेषु तपस्विकन्यावदनाम्बुजेषु ॥ ५ ॥
माध्वीकधामानि मधुव्रताना सैहस्रधामोत्सववत्सलानि ।
घर्मोपलम्भात्सुभगीभवत्सु जजृम्भिते(रे) वारिषु वारिजानि ॥ ६ ॥
पठत्सु सूर्यामिव कोकिलेषु चालप्रवालाधरबन्धुराभि ।
प्रतानिनीभि सह पादपाना मधु पुरोधा विदधे विवाहम् ॥ ७ ॥

१. पुष्पकम्पिता २ कामान्तकम् ३. ध्यानपरेषु ४ कामाभिप्रायवर्धनं
५ सूर्योदये पद्मानि विकसन्ति ६ सूर्येण दृष्टं सूक्त सूर्या, तद्धि पाणिग्रहे पठ्यते

सौरभ्यलुभ्यन्मधुपीनिपीतपुष्पश्रियाशोभत हेमपुष्पः ।
प्रेक्षायकानामविलङ्घनीयं चकार चित्तासनशासनं यः ॥ ८ ॥
पलाशपुष्पेषुभिरेव देवः पुष्पेषुरध्वन्यजनं जघान ।
तल्लोहितेनेव तथा हि तेषु लौहित्यमत्यद्भुतमाविरासीत् ॥ ९ ॥
नवप्रसूनासवलालसानां कुलैरलीनां बकुलश्चकाशे ।
मनोरमे सत्यपि वृक्षवृन्दे यस्मिन्नयाशा कुसुमायुधस्य ॥ १० ॥
द्रैष्टान्यपुष्टस्वरदैवतस्य यस्य प्रवासिव्यसने नियोगः ।
श्रुत्वा कुँहूमन्त्रममुं मुहूर्तं जगुर्न सामानि मुदा मुनीन्द्राः ॥ ११ ॥
यस्मिन्वसन्ते सितपुष्पजातौ सा जातिरस्पर्शत हन्त भृङ्गः ।
प्रायेण बन्धुः सुहृदामतीतश्चिचे वसत्युत्सववासरेषु ॥ १२ ॥
विशेषितत्वात्कुसुमाकरेण वनं तदप्यन्यदिवावलोक्य ।
वेदान्तवेद्यान्यपि मानसानि चलन्ति यत्नान्मुनयो नियेमुः ॥ १३ ॥
तपोवने तत्र वनेचराणां तन्वन्रतिं रत्यवलम्बिनां सः ।
कङ्केलिभिः पल्लवितामसा(शा)खैरुच्छृङ्खलः पञ्चशरश्चचार ॥ १४ ॥
अथागमोपान्तकृतान्निकेतात्पुष्पावचायव्यपदेशिनी सा ।
समं सखीभिः प्रचचाल चारुविलोचना भूपविलोभनाय ॥ १५ ॥
यैस्मिन्वने सिञ्जितनूपुरेण गतेन सा संचरते स्म तेन ।
तिरस्कृतावेकपदेऽपि येन यानस्वनौ हंसविलासिनीनाम् ॥ १६ ॥
तुङ्गस्तनीनामियमिद्धकान्तिर्मध्ये सखीनामधिकं बला(भा)मे ।
नवप्रसूनस्तबकाचितानां नवौषधीनां ज्वलनौषधीव ॥ १७ ॥
मुक्तामयं दाम निजांशुयोगान्नीलाश्मभिर्मिश्रमिवाश्रितेन ।
सा केशपाशेन भृशं बबन्ध यूनां मनामीव विलोचनानि ॥ १८ ॥
अन्तःस्फुरत्केसरगन्धलुब्धैर्द्विरेफवृन्दैरुपरि भ्रमद्भिः ।
चकार तस्याश्चिकुरोच्चयस्य निर्भरमेनानीव मुहुर्मनोभूः ॥ १९ ॥

१. नागरवेदारः, चम्पको वा २. पथिकानाम् ३. ऋषिः ४ काम्मो देवता.
५. मन्त्रा हि ऋर्षिदैवतनियोगनियुक्ता एव भवन्ति. ६. 'त' स्त. ७. 'त' स्त.
८. इत्यादिदोषपरिहारार्थं यथाद्दिव तदुपरि भ्राम्यते, नातिर्भंगतम.

कुम्भो(म्भौ) पुरस्तत्कुचयोर्न किंचित्पद्माकरस्तत्करपोष्यवर्गः ।
तदङ्गकान्तेः कनकं वराकं राकाशशी तद्वदनानुकल्पः ॥ २० ॥
भ्रूभङ्गसङ्गादिव वक्रिमाणमापुस्तदीयानि विलोकितानि ।
दध्रे विशुद्धद्विजसंस्तुतापि नीरागता नाधरपल्लवेन ॥ २१ ॥
बिसं यदि स्यात्किल कर्णलग्नविपक्षपङ्केरुहतस्तदा स्यात् ।
आत्मानमिन्दुः परिवेषवेषप्राकारगुप्तं रचयांचकार ॥ २२ ॥
कपोलयोः काप्यपरैव शोभा यत्कुम्भदासीद्द्विपदन्तदीप्तिः ।
सा वाचि काचित्कलता च तस्या यस्याः शिलं कोकिलकूजितानि२३
सुधांशुधामोज्ज्वलदन्तदीप्तिलिप्तस्य तस्याः शुचिता स्मितस्य ।
समौक्तिकज्योतिपि ताम्रपर्णीडिण्डीरपिण्डेऽपि कदाचिदेव ॥ २४ ॥
रराज तस्यास्तनुरोमराजिस्तुङ्गस्तनस्तम्भनिबद्धमूला ।
गभीरनाभीकुहरप्रवेशकामेन कामेन ततेव रज्जुः ॥ २५ ॥
मन्ये महानन्दपदं तदेतन्नितम्बबिम्बं शशिबिम्बमुख्याः ।
यस्मिन्नवस्थाय तथा हि सुस्थैर्नेत्रैः पुनर्नावदृते नराणाम् ॥ २६ ॥
येन द्रुतं यानविवर्जितानां मतङ्गजानां जगृहे करश्रीः ।
मन्ये तदूरुद्वितयस्य तस्य न दुष्कराभूत्करभाभिभूतिः ॥ २७ ॥
मुनिप्रभावादतिरम्यभावान्फलप्रवासप्रसवानजस्रम् ।
संपादयद्भिस्तरुभिः समन्तादाकल्पितं कल्पतरूपमेयैः ॥ २८ ॥
अथ श्रुतश्रौतविधीनि तन्वन्मनास्वनानूत्तिपदोत्सुकानि ।
ददर्श सा श्रीरिव दर्शनीया श्रेयस्करं मस्करिणां वनं तत् ॥ २९ ॥
(युग्मम्)

मूर्तैर्विवर्तैरिव भानुभासामुद्भासमानं मुनिभिर्महद्भिः ।
तत्राश्रमं सा सुतनिर्विशेषमृगं मृगाक्षी मृगयांचकार ॥ ३० ॥
अनोकहस्कन्धविलम्बितार्द्रवल्का सुगन्धैर्बलिपुष्पगन्धैः ।
तपस्विनां भूमिरभीतसत्त्वा जहार सा शान्ततयैव चेतः ॥ ३१ ॥

---

१ 'विशङ्कमान' क. २ भूमिशरीरा पाठ्यम

मनः प्रविश्यैव तदीप्सितज्ञा गिरां च पीयूषकिरां प्रयोक्त्री ।
तामाश्रमालोकनलोलदृष्टिमिष्टा सखी काचिदवोचदेवम् ॥ ३२ ॥

गौराङ्गि सारङ्गकुलानि पश्य सुखोपविष्टान्युटजाङ्गणेषु ।
छायाद्रुमाधस्थितिभिर्मुनीन्द्रैः स्नेहादिव व्यत्ययिताश्रयाणि ॥ ३३ ॥

एते पुरः सुन्दरि सुन्दराणि द्रुमाः सुमानि प्रसुवन्ति तानि ।
*कृतोरुभावेऽपि भवत्सु येषु भृङ्गाङ्गना निर्गमयन्ति दौस्थ्यम् ॥ ३४ ॥*

दुकूलिनो वल्कलिभिर्विमुक्ताहारैः सहारा वलिनः कृशाङ्गैः ।
शान्त्यैव लोकोत्तरया मुनीन्द्रैरेभिर्विजीयन्त इव क्षितीन्द्राः ॥ ३५ ॥

पञ्चाग्निसेवा परितापशान्ति[1] जाड्यव्ययं तीर्थजलावगाहः ।
अरण्यवासश्च भयापहारं सारङ्गशावाक्षि करोत्यमीषाम् ॥ ३६ ॥

आद्याच्चतुर्थं पुरुषार्थमर्थकामावतिक्रम्य भजद्भिरेभिः ।
कर्माणि [2]षट्कर्मविगर्हितानि श्रुत्वैव मुक्तानि न चानुभूय ॥ ३७ ॥

निरीक्ष्यमाणास्तरुणार्कभासा मुहुः सहासं मुनिमण्डलेन ।
अमी शमीच्छायमुपेत्य पश्य क्रीडन्ति यज्ञाभिनयेन डिम्भाः ॥ ३८ ॥

इतश्च नेत्रे कुरु चारुनेत्रे मित्राय साधारणचापलत्वात् ।
अयं बटुर्यच्छति मर्कटाय पचेलिमान्यामलकीफलानि ॥ ३९ ॥

*अन्तःसमारोपितपावकानां भासा लसन्त्येव वि[3]लसमानाः ।*
ज्योतिर्विचिन्वन्ति मुमुक्षवोऽमी निमीलिताक्षं हृदि दीपदीप्तम् ॥ ४० ॥

कुप्यन्ति तावद्द्विपतोऽपि नैते कुप्यन्ति चेत्तं सकलं दहन्ति ।
विलङ्घ्यते वारिधिभिर्न वेला विलङ्घ्यते चेत्परिभूयते भूः ॥ ४१ ॥

अनिष्ठुरालापिनि नैष्ठिकोऽयं समाश्रयत्याश्रममाद्यमेव ।
गुरोर्गृहीतं रहितं च [4]दोषैर्मृषैव वक्तुं हितमीहते कः ॥ ४२ ॥

*सैव क्रिया या विदधाति धर्मं वचस्तदेव श्रुतिसंस्कृतं यत् ।*
सेव्यः स एव स्वपदप्रदो यः स एव यस्तत्पदबुद्धिरत्र ॥ ४३ ॥

---

१. 'जाप' ख. २. ब्राह्मणनिन्दितानि. ३. 'भा' ख. ४. पशुघातादिभिः.
५. 'मो' ख.

विलोक्य वातेन वितायमानां होमाग्निधूमावलिमन्तरिक्षे ।
नवाम्बुवाहभ्रमसंभ्रमेण शिखण्डिनस्ताण्डवमारभन्ते ॥ ४४ ॥
एषा नदी सुन्दरि नातिदूरे यस्याः समीरोऽयमुपैति शीतः ।
आधूतसौगन्धिकगन्धलोलै रोलम्बलोकैरनुगम्यमानः ॥ ४५ ॥
इति स्थितायामभिधाय तस्यां तरङ्गिणीं तां प्रति सा प्रतस्थे ।
कारण्डवाडम्बरमण्डितायास्तीरेऽस्ति यस्याः स नृपस्तपस्यन् ॥ ४६ ॥
सविभ्रमं सा ददती पदव्यां पदानि पद्मध्वजलाञ्छनानि ।
हंसाङ्गनानां गतिभिर्जितानामीर्ष्याकषायं हृदयं चकार ॥ ४७ ॥
तामापतन्तीमवलोक्य रम्यां जयं स्मरश्चेतसि निश्चिकाय ।
शंभूपमं भूपममुं तु पश्यन्नसौ सनिःश्वासमभून्निराशः ॥ ४८ ॥
स्वच्छस्वभावामविमुक्तसत्त्वामजस्रसङ्गीकृतहंससेवाम् ।
तामापगामाप तदायताक्षी साक्षान्मुनीनामिव चित्तवृत्तिम् ॥ ४९ ॥
सम्यक्समाधिप्रतिपादितैस्तैस्तेजोभिरभ्युज्ज्वलयन्निवाशाः ।
ततस्तयालोक्यत चक्रवर्ती स्नानं विधित्सन्सरितः स तस्याः ॥५०॥
वक्षस्तटेन स्फुटदन्तिदन्तव्रणेन मूर्ध्ना च जटाचितेन ।
प्रदर्शयन्नेकशरीरवासादसौ विभिन्नाविव वीरशान्तौ ॥ ५१ ॥
नित्यप्रसस्नानपिशङ्गिताभिर्जटाभिरुद्भासितमौलिभागः ।
कर्पूरचूर्णाभफटोल्लसेन तुल्योपमस्तक्षकपन्नगेन ॥ ५२ ॥
असंनिधानेऽपि बलायुधानां क्षमः समर्था(मा)मिव जेतुमुर्वीम् ।
कृतार्थमर्थैरिव कर्तुमर्थिसार्थं समर्थः श्रितवल्कलोऽपि ॥ ५३ ॥
तरङ्गिणीतीरभुवि स्थितोऽपि तेजस्तरङ्गैर्विगतोपमानैः ।
ज्योतींषि तारापथसंचराणि व्यतीत्य तिष्ठन्नुपरीव तेषाम् ॥ ५४ ॥

(कुलकम्)

तं वीक्ष्य तीक्ष्णद्युतिदुर्निरीक्ष्यं तस्थे भयस्तम्भितया तयापि ।
भवत्यसत्कर्मणि वर्तमानमशङ्कितस्यापि हि शङ्कि चेतः ॥ ५५ ॥

---

१. 'सर्मात्तवर्ती' ख.

भूपस्य तस्याभिमुखं सखीभिर्नीहिंरिमैं सा विजहार हावैः ।
हारीणि रूपादपि चारुरूपाद्वामभ्रुवा विभ्रमवल्गितानि ॥ ५६ ॥
अनङ्गसंजीवनमङ्गमस्यास्तत्रापि चित्राणि विभूषणानि ।
विलासवाजीकरणं वयश्च तत्किं न यन्मानसमाचकर्ष ॥ ५७ ॥
शाखाग्रतः पल्लवमुल्लसन्तं लुलाव साविष्कृतनिम्ननाभिः ।
पाणौ सवर्णत्विपि यः स्थितोऽपि न क्षिप्रमालक्ष्यत तत्सखीभिः ॥५८॥
मुहुर्मुहुरम्भोरुहभोगलोभाद्भृङ्गैः पुरः पातिभिराकुलेव ।
सभ्रूपताकानि विधूतहस्ता चिक्षेप सा दिक्षु निरीक्षितानि ॥ ५९ ॥
बालं मरालं पुरतः प्रयान्तं ग्रहीतुकामा किल कौतुकेन ।
चचाल सा स्मेरमुखी समीरचलद्दुकूलाञ्चलदर्शितोरु ॥ ६० ॥
वेणुस्वनाहूतमृगं मृदङ्गनिनादमत्तप्रचलाकिलोकम् ।
गानावमानाकुलकोकिलं च संगीतमङ्गीकृतमङ्गनाभिः ॥ ६१ ॥
चेतोहरं चारभिरङ्गहारैरङ्गद्युतिद्योतितरङ्गभूमिः ।
विलासिनी कापि विलासलास्यं श्रीनन्दनानन्दकरं चकार ॥ ६२ ॥
रागो वसन्तः समयो वसन्तः क्रीडाश्च तासां मदनैकदूत्यः ।
उपेक्षितुं नैतदपेक्षतेऽन्यः शान्तात्मना तेन विना नृपेण ॥ ६३ ॥
भूयः पुरोभूय विलासनार्थं तं पार्थिवं यावदपश्यदेषा ।
तदेतदन्याय्यममृष्यतेव सैव प्रजज्ञे मदनेन तावत् ॥ ६४ ॥
देव्या यदर्थं मदनो नियुक्तस्तस्मिन्न भूपे प्रनभूव किंचित् ।
बिभेद तामेव शरैर्वराकीं न हीक्षते कोपपदं विलक्षः ॥ ६५ ॥
वातावधूतैस्तटपादपानां पुष्पैः पतद्भिः सुभगे शरीरे ।
गन्तुं त(न) सान्यत्र शशाक मूर्तैरनङ्गबाणैरिव बाध्यमाना ॥ ६६ ॥
कर्णोत्पलं नावगलद्विवेद जमन्थ नार्धमथितां च मालाम् ।
सा केवलं चित्रगतेव तिर्यग्गतेन नेत्रेण नृपं निदध्यौ ॥ ६७ ॥
दृक्कोणयोः पाणिसरोजयोश्च मनस्यनङ्गज्वरजर्जरे च ।
तस्यास्तदालोकनलुब्धदृष्टेर्दृष्टः सखीभिः सम एव रागः ॥ ६८ ॥

१ 'प' ख　२ 'लोल' ख

सा लज्जया तं मदनोपतापमपारयन्ती गदितुं स्वसख्याम् ।
वपुस्तदङ्के न्यधिताधितापं मनः पुनः पार्थिव एव तस्मिन् ॥ ६९ ॥
तस्यास्तथा कामकृतामवस्थां मत्वाथ सापि प्रतिकर्तुमूचे ।
तन्मैत्रमप्रेरणया प्रवृत्तिः कष्टश्रितानां सुहृदां मुदे या ॥ ७० ॥
स्थानेऽनुरक्तासि न लज्जनीयमस्मिञ्जने मानसनिर्विशेषे ।
यतः सरो मानसमन्तरेण नान्यत्र केलिं कुरुते मराली ॥ ७१ ॥
अलं रुदित्वा मुखमुन्नयैतन्मा निःश्वसे धूसरिताधरोष्ठम् ।
मनोरथं तूर्णमवेहि पूर्णं मयि स्थितायां किमसाध्यमस्ति ॥ ७२ ॥
तावत्त्वमत्राम्बुजपत्रतल्पे संकल्पजन्मज्वरतसमङ्गम् ।
निधाय मोचां कुचयोर्विमुञ्च प्रियौषधं यावदिहानयामि ॥ ७३ ॥
तामेवमाश्वास्य जवाद्वयस्या तस्यान्तिकं भूमिपतेर्जगाम ।
उल्लङ्घ्य याच्ञालघुतामलज्जी को मानगन्विष्यति मित्रकार्ये ॥ ७४ ॥
भूमीपतेरन्तिकमभ्युपेता महःसमूहैः पिहिताङ्गकान्तिः ।
साक्षान्न सालक्ष्यत तद्वयस्या [1]चित्रेव चित्रद्युतिसंनिधाने ॥ ७५ ॥
तस्य प्रणम्यस्य कृतप्रणामा समर्थयं प्रश्रयसंश्रयस्य ।
प्रभावसंभावितभीरभीतेरित्यब्रवीदग्रुवतः पुरः सा ॥ ७६ ॥
हे विज्ञ विज्ञापयितास्मि किंचित्त्वामुन्नतत्वादभियाचनीयम् ।
तदर्हसि क्षन्तुमसद्य सद्य स्वाभाविकी सत्सु यतस्तितिक्षा ॥ ७७ ॥
अपाकरं नापरमर्थितायाः साप्युन्नते चेतसि चेवे च कोऽर्थी ।
कूपेऽर्थ्यमाने यदधोमुखत्वमुत्कन्धरत्वं पुनरम्बुवाहे ॥ ७८ ॥
सखीयमे[त]द्वनमन्वगच्छन्महेच्छपुष्पाण्यवचेतुकामा ।
त्वद्दर्शनाचेतसि लग्नमस्याः पुष्पेषुचापच्युतमाशु पुष्पम् ॥ ७९ ॥
यथा त्वमेकाग्रमनास्तपस्वी निरीक्षसे तीक्ष्णमरीचिमेनम् ।
तथा तपस्तीक्ष्णमनन्यदृष्टिस्तपस्विनी सापि विलोकते त्वाम् ॥ ८० ॥
प्रयत्नतोऽपि प्रतिषिध्यमानं मौनैकमूलं प्रतिषिद्धशुद्धिः ।
निधाय चित्तं त्वयि तप्यते सा साधायसाधाविति गोप्यमर्थम् ॥ ८१ ॥

१. 'रम' ख. २. नक्षत्रम्. ३. मूर्धः. ४. हे मानिन्.

सा दक्षिणादुद्विजते समीराद्वैरायते रश्मिषु शीतरश्मेः ।
श्रुत्वा वचः कोकिलकामिनीनामार्ता च वार्तान्तरमातनोति ॥ ८२ ॥
नरेशवंशप्रभवोऽसि कश्चिन्नरेश्वरो नूनमनूनतेजाः ।
न लक्षणैरेभिरुपेतमेतद्वपुर्विधत्ते विधिरेवमेव ॥ ८३ ॥
न साधुरात्मस्तुतिरुन्नतानामपत्यमेषापि न चान्यपत्नी ।
तदुत्तमाचार परिग्रहीतुं तां रोहिणीमिन्दुरिवार्हसि त्वम् ॥ ८४ ॥
जानाति साप्येवमलब्धमध्ये पदे तयादायि मनोनुरागः ।
परं वराकी रिपुणा स्मरेण कदर्थितान्यत्किमियं करोतु ॥ ८५ ॥
उक्तान्यदन्यत्प्रतिवक्ति शून्या यात्यन्यतोऽन्यत्र गतिस्पृहापि ।
तथात्मयुक्तात्मतु(सु)वा यथासौ निर्वाति नोष्णेन न शीतलेन ॥८६॥
सकृत्स्वहृद्रोगमिमं सलज्जा शुष्कस्मितैः सा किल संवृणोति ।
कपोलपाण्डिम्नि परं न पश्यत्यपह्नवोपायमनङ्गचिह्ने ॥ ८७ ॥
निरस्य हारं हृदि चन्दनाम्भःप्रक्षिप्तमाक्षिप्तपयोजपत्रे ।
त्यक्तं तदप्युन्मदना निधातुमाकाङ्क्षति त्वत्करपल्लवं सा ॥ ८८ ॥
तदेहि देहि प्रिय जीवितव्यमस्यास्तु किंचाञ्जलिरेष बद्धः ।
कल्पद्रुकल्पेषु भवादृशेषु निरर्थिका नार्थिजनप्रवृत्तिः ॥ ८९ ॥
इत्येतदीयानि वचांसि वाचंयमेऽवजानत्यवनीश्वरेऽस्मिन् ।
न केवलं सा मुमुचे निराशा निःश्वासमस्त्रं मकरध्वजोऽपि ॥ ९० ॥
सख्यां नरेन्द्रेण निराकृतायां मायाङ्गनासौ सह सौविदल्लैः ।
अन्तर्दधेऽन्तर्दधती विषादं सौन्दर्यसंपच्चकृतक्रियायाम् ॥ ९१ ॥
विषमशरशरैरभिन्नवक्षःस्थलमलघुश्रियमुज्झितप्रसूनाः ।
नृपमथ विचकथिरेऽम्बरस्थाः प्रसरति हि प्रियता कृतावदाने ॥९२॥

इति श्रीसोमेश्वरदेवविरचितायां काव्यरत्नकरण्डिकायां सुरथोत्सवनाम्न्या मायाङ्गनावर्णनो नाम त्रयोदशः सर्गः ।

---

१. अविदिताभिप्राये. २. 'इति श्रीगुर्जरेश्वरपुरोहितश्रीसोमेश्वरदेवविरचिते सुरथोत्सवनाम्नि महाकाव्ये मायाङ्गनावर्णनो नाम त्रयोदशः सर्गः।' इति पाठः ख पुस्तके उपलभ्यते. क-पुस्तकलेखदर्शनेनानुमीयते, कदाचिदनेन कविवरेण 'काव्यरत्नकरण्डिका'ख्योऽपि ग्रन्थो निर्मितो भवेदिति

चतुर्दशः सर्गः।

अथ पार्थिवस्य तपसा महीयसा परमेश्वरप्रियतमा प्रसेदुषी।
निजमूर्तिमूर्तिशमनीमदर्शयन्न सतां महत्सु विफलः परिश्रमः॥ १॥
मुदितेन तेन मुनिना निवेदितं यदचिन्तयच्चिरमनन्यमानसः।
पुरतः स्फुरन्निरुपमं महन्महस्तदवेक्ष्य स क्षितिपतिर्विसिस्मिये॥ २॥
भुवनैकमातरमवेहि वत्स मां मुदितामनेन महता व्रतेन ते।
तदरं वरं वद यदर्थमर्थिता भवताहमित्यभिदधे तमद्रिभूः॥ ३॥
ब्रुवतीमिति क्षितिधरेश्वरात्मजां हृषितात्मनः प्रणमतः प्रजापतेः।
व्यलगल्ललाटफलके यदुर्वरारज एव राज्यतिलकं बभूव तत्॥ ४॥
मुदितामरप्रहितपुष्पसंपदा सुरभीकृते शिरसि रोपिताञ्जलिः।
प्रमदाश्रुसीकरकरम्बिताम्बकः स जगाद सादरमिमां मुदा क्षितिम्॥ ५॥
जनिरद्य मेऽजनि शुभाशु भावितं तनुनाप्यनेन तपसां फलं महत्।
अनिदर्शनेन तव दर्शनेन यन्महती मृडानि मयि योग्यतार्पिता॥ ६॥
किमिदं विभातमविभावितारुणां निरंवामहं किममुनैव वर्त्मणा।
गिरिजेऽरिजित् तव पादपङ्कजं यदमोघदर्शनमदर्शमग्रतः॥ ७॥
तमिमं नमामि चरणं रणोत्सवे तव येन रोपत इवारुणत्विषा।
महतेः पुरैव रिपुर्र्ध्यता द्रुतं नखदर्पणप्रतिमितः स जगृहे॥ ८॥
हरिचक्रमक्रमत यत्र नाद्रिजित्पविना विनाशयितुमीश्वरो न यम्।
अपि तस्य यः सपदि विद्विषोऽपिषच्चरणं प्रणौमि तव तं नतं सुरैः॥ ९॥
मरुतामजस्रमशुभापहारिणौ चरणावुभौ प्रणमनीयतां गतौ।
प्रथमस्तवैष महिषान्तकृद्वरेरपरो विरोचनतनूजवन्धनैः॥ १०॥
अयमेव देवि भुवनत्रयेऽपि ते चरणः प्रियार्थकरणस्तथा हि यः।
प्रणतः प्रसादसुखमिच्छता जगद्गुरुणापि केलिकलहे पिनाकिना॥ ११॥
मधुकैटभौ विकटविक्रमौ यथा स्वैममूमुहः प्रहरति त्रिविक्रमे।
अधुनापि गाययति पङ्कजासनस्तव तद्यशस्तदुदरस्थिताः प्रजाः॥ १२॥

---

१. शुमेधसा. २. देर्वाक्ष्पम्. ३. राज्ञः. ४. शुक्तिमगमम्. ५. दृष्टवान्. ६. प्रहारात्. ७. महिष. ८. उद्गच्छता. ९. विम्बितः. १०. 'प्रमे' स्त. ११. हिंगार्थकला स्मैनि पर्णी १२. 'स.' स्त. १३. मोहितवती

सकलोऽपि केन महिमा हिमाद्रिजे परिमीयताममितवैभवस्तव ।
यदुदेति दैवतशरीरतः कदाप्यथ च त्वमेव विदधासि तान्यपि ॥ १३ ॥
उदितेन येन स बभूव भूधरः सुरधाम वामन इवोच्चकैरपि ।
महसा ततोऽपि महता हतासुरं तव तद्वपुर्विपुलमत्यशय्यत ॥ १४ ॥
खरहेतिभिर्नखरहेतिरप्यसावजितः परैर्जयति यानकेसरी ।
कुरुते स यः समरकृत्तचामरः स्थिरचामराममरराज्यसंपदम् ॥ १५ ॥
तदहं कृतं तव नमामि हुंकृतं किल कृन्तता समिति धूम्रलोचनम् ।
अरिदारणैकरुचिरेण निर्मितः सफलोऽपि येन विफलो महानसिः ॥ १६ ॥
अलिकायमातरलिकाय कोमलामलकावलिं कलयते नमस्तव (?) ।
द्रुतमाविरक्रियत चण्डमुण्डयोः प्रलयक्षये च युधि येन चण्डिका ॥ १७ ॥
रुधिरासवं रुधिरबीजसंभवं भवती भवानि समराजिरे पपौ ।
तदपापचायनविकासिचेतसाममृताशिनामुदलसन्मदः पुनः ॥ १८ ॥
दलिते त्वया दितिजचक्रवर्तिनि त्रिदिवश्रिया तदुपतप्तया श्रितः ।
प्रसरत्प्रमोदनयनाम्बुशीतलो जलयन्त्रवेश्मसदृशः सहस्रदृक् ॥ १९ ॥
पुरुषं चिराय परिचर्य दुर्लभं भवभीरुभिर्यदभिलप्यते पदम् ।
सकृदानता च सुलभा च भाविनां वनितापि तद्वितरसि प्रसेदुषी ॥ २० ॥
कमला त्वमेव कमलानने यया परितुष्टया नरपतित्वमीयुषी(षि) ।
मनुजेऽपि देव इति सेवकमजैरभिधीयते न च न भाति तस्य तत् ॥ २१ ॥
भवतीमतीन्द्रियदृशः सरस्वतीं निगदन्ति देन्तिवदनोपपादिनि ।
यदनुमहात्कविगवीषु तद्वसत्यमृतं विषीभवति दुर्जनेषु यत् ॥ २२ ॥
शुभलक्षणात्तव निरीक्षणक्षणात्किमतः परं प्रियतरं यदर्थये ।
त्वदवश्यदेयमथ वा भवानि तत्त्वयि निर्भरा भवतु भक्तिरेव मे ॥ २३ ॥
दशनांशुभिर्दलितकुन्दसुन्दरैः सितमातपत्रमिव तस्य तन्वती ।
नृपतेः पुरस्त्रिपुरवैरिवल्लभाभिदधे प्रसादमधुराक्षरां गिरम् ॥ २४ ॥

१. तदपि तेजसो भवत्तेजसा जितम्. २. तीक्ष्णायुधैः. ३. हुंकारेणैव वैरिणो नष्टत्वात्. ४. ललाटाय ५. शुभे. ६. परमात्मानम् ७. मुक्तिम्. ८. देवाभिधानम्. ९. हे विनायकमातः १०. सतां प्रिय दुर्जनानामप्रियम्

भज वत्स वत्सरसहस्रवर्तिनीं निजराज्यसंपदमदभ्रविक्रमः।
भवतश्चिराय विरहार्तिमङ्कैरनुपस्कृतानुपचितैर्व्यनक्ति या॥ २५॥
जपमालिकां जहिहि बाहुनामुना रिपुनिग्रहाय कुरु कार्मुकग्रहम्।
दधदुर्वरावलयमेककोऽपि यः किरिकच्छपोरगपतीनतीयिवान्॥ २६॥
धृतिमादधातु धरणेर्द्विधाप्यसावसमापनीयविभवो भवद्भुजः।
समरे करालकरवाललालनः कुरुते विरोधिहृदयानि यो द्विधा॥ २७॥
भवतः कदाचिदपि संगराङ्गणे न पराभवः परभवो भविष्यति।
अरुणात्तमिस्रमिव मङ्क्षु नङ्क्ष्यति त्वदनीकतोऽपि रिपुराजमण्डलम्॥२८॥
न भयं भविष्यति कदाचिदीतिज निजबन्धुभिर्नृप न विप्रयोक्ष्यसे।
मुखरे च मङ्गलमृदङ्गनिःस्वनैर्न गदः पदं तव पुरे करिष्यति॥ २९॥
रिपुनायिकानयनवारिसीकरप्रकरैरपास्तभुवनभ्रमश्रमम्।
जगतां त्रयीमपि परिष्करिष्यते करिदन्तसंततिसितं यशस्तव॥ ३०॥
तनये नियुज्य निजराज्यसंपदं पदगारुरुक्षुरथ तार्क्ष्यलक्षणम्।
जननान्तरे तरणिसंभवो भवान्भविता मनुर्मनुजवासवाष्टमः॥ ३१॥
तमिति क्षितीशमभिषिच्य वाङ्मयैरमृतद्रवैः क्वचिदगादगात्मजा।
गतिमागतिं च महतामवेक्षितुं न हि चर्मणे प्रभवतो निरीक्षणे॥ ३२॥
फलितेऽथ सौनिजमनोरथद्रुमे न मदस्य भूपतिरभूद्वशंवदः।
न महानपीतर इवोत्सवे सति स्वयमेति सीदति न चैत्र सीदति॥ ३३॥
सुरथः समर्थितसमीहितस्ततः शतमन्युरन्य इव तेजसा ज्वलन्।
न्यवृतन्निवृत्तवृतिनं मुनिं प्रति प्रतिभूरभूत्प्रथममेव यः श्रियः॥ ३४॥
नृपतिर्निजागमनदर्शनोत्सुकानभिधावतः स्वजनानमानमन्।
ऋषिपुत्रकानवितथाशिषस्तया गिरिजाप्रसादकथयाभ्यनन्दयत्॥ ३५॥
तरवोऽपि तत्र नवमञ्जरीमिषादधतः प्रमोदपुलकोदयश्रियम्।
कलकोकिलाकलकलच्छलाज्जयं जगुरागते नरपतौ कृतागमि॥ ३६॥

---

१ राज्याङ्कैर्दयितवियोग. २. भार्गव सतोष च. ३. हे नरेन्द्र. ४. उन्मदं. ५. निवर्तितव्रत. ६. आश्रमे ७ कृतागमे

कथितप्रियागमनपारितोषिकस्पृहयाङ्कालकनिवेदितागतिः ।
स विवेश वेश्मसु मुनेर्मनूपमः प्रमदप्ररूढपुलकेन वर्ष्मणा ॥ ३७ ॥
तपरः प्रभावमवगच्छता सतां प्रकृते न कर्मणि नियोगनिश्चयम् ।
अनिवेदितोऽपि बुबुधे सुमेधसा मुनिवेधसा नृपतिसंपदागमः ॥ ३८ ॥
शिरसा रसास्पृशमुपेत्य संभ्रमान्नृपमुन्निनाय मुनिरुन्नतान्वयम् ।
प्रमदाश्रुपूर्णनयनाञ्जलिच्छलादयमर्घदानमनघम्य च व्यधात् ॥ ३९ ॥
श्रुतिशीतलेन मुखरागसूचिता वचसा वितृत्य कृतकृत्यता निजाम् ।
शमिनः पुर. सुरथभूपतिः पुनर्विनयातिरेकरचिताञ्जलिर्जगौ ॥ ४० ॥
भगवंस्तवार्जवमगोचरं गिरा रसना न नाम भणितुं क्षमा मम ।
न च मौनिनं जनमिमं तितिक्षते त्वदनुग्रहप्रहित एष संमदः ॥ ४१ ॥
भुवनैकसज्जन तवात्मनः स्तुतिर्न समीहितेऽतिविदितापि सा किमु ।
न मया तदेकरुचिना करिष्यते निजमिष्टमुज्झतिकृते परस्य कः ॥ ४२ ॥
तदसांप्रतं यदभिसधिरीक्ष्यते भुवनोपकारकरणे भवादृशाम् ।
किमहस्करोऽयमपरोपरोधतस्तिमिराणि भीषणतराणि कृन्तति ॥ ४३ ॥
विनयं व्यनक्ति तनयोऽपि यत्र न शपते मियापि सुहृदोऽप्युपासते ।
दुरितोदये विदुर दुरितात्मना भवतैव तत्र जनकायितं मम ॥ ४४ ॥
अजलं मम त्रिपथगावगाहनं तुरगाध्वरोऽयमजनि क्रियां विना ।
अचतुर्मुखं वपुरिवाश्रित' स्वयं कमलासनस्त्वमवलोकितोऽसि यत् ॥ ४५ ॥
तमिति ब्रुवन्तमवनीपतिं जगात्मतिजल्पति स पतिरत्नलिनाम् ।
न परप्रयुक्तनिजवृत्तवर्णनश्रवणे चिरं प्रणयितापि सा(दि ता)दृशाम् ॥ ४६ ॥
अधुना नरेन्द्र वचनामृतेन ते वयमद्य शर्मशिखरेऽधिरोपिताः ।
गूनविधुनामिव सता यदुन्नतिर्महते महाय जगतोऽपि जायते ॥ ४७ ॥
भवतोऽपि बोधयितुमीशानेऽधिकं मतिवैभवेन सुभगं भविष्यतः ।
चरितुं सुदुश्चरमिदं तपः पुनर्नृप नापरः प्रभवति त्वया विना ॥ ४८ ॥

---

१. नहि मयो निष्फलं भवति २ कर्तुमारब्धे ३ नहि महान् प्रत्युपकारसंस्कारलघ्वस्य निरीक्ष्यते ४ 'धे' पा. ५ मन्यन्ते ६ अपि तु पर्यन्ति त्व. ७. अनिवार्य. ८ निराकर्तुं ९ गिरा १०. 'षु' पा. ११ मैत्रम्

अपरेण किंचिदुपकुर्वता कृतं मनुते गुणं सहजमप्यनुत्तमः ।
यदि दीप्तता न कनके निसर्गजा तदयस्यपि स्फुरतु वह्निशोधिते ॥ ४९ ॥
नरदेवमेवमभिधाय नायकः शमिनां पुनस्तदभिषेककाम्यया ।
प्रजिघाय तीर्थसलिलाय सत्वरं कुरदेणचर्मरुचिरान्बटून्बहून् ॥ ५० ॥
करुणानिधिः स वरुणाधिदैवतैरभिषेकमस्य विरचय्य सामभिः ।
हरवल्लभार्पितवरानुवर्तिनीं व्यतरद्बधूमभिनवामिवाशिषम् ॥ ५१ ॥
सचिवव्रुवैरपकृतं पुरास्य यैः क्षयमाययुः समिति ते परस्परम् ।
विभवो न केवलमधर्मसंभवः सहसा विनश्यति विनाशयत्यपि ॥ ५२ ॥
अपरैः पराक्रमरतं क्रमागतैरथ मन्त्रिभिस्तमवगन्तुमीरिताः ।
प्रतिपत्तनं प्रतिवनं प्रतिस्थलं प्रतिपर्वतं प्रणिधयः प्रतस्थिरे ॥ ५३ ॥
अवगम्य सम्यगथ गूढपूरुषैः पुरुषोत्तमांशमसुमाश्रमाश्रयम् ।
महतीं मुदं च पृतनां च बिभ्रतः सचिवाः प्रचेलुरविलम्बिताः पथि ॥ ५४ ॥
पटुभिः प्रयाणपटहस्वनैः प्रभोरुपलम्भसंभवमिमं महं मुहुः ।
ककुभां वदन्त इव ते द्रुतं ययुः प्रमदाः कमुत्सुकमहो न कुर्वते ॥ ५५ ॥
अलघीयसामपि विलङ्घ्य भूभृतां कटकाननेकपघटामदोत्कटान् ।
तमगाधमब्धिमिव सा पतिं यती क्वचनापि न स्थितिमवाप वाहिनी ॥५६॥
अभिदधदपि हि प्रियं प्रियः स्यादिति तुरगोद्धृतधूलिजालदम्भात् ।
प्रथममुपययौ मही महीन्दोः प्रियसचिवागमनं गदिष्यतीव ॥ ५७ ॥
अभिनवमिभबृंहितानि शृण्वन्पणवरवैरुपबृंहितानि तानि ।
चटुलदृगुटजाङ्गणानुसारी हरिणगणः क्षणमुन्मनीबभूव ॥ ५८ ॥
किमिदमिह बभूव नैव यावद्धृदि नृपतेः स मुनेर्मनाग्भ्रमोऽपि ।
प्रणिधिभिरभिधीयते स्म तावज्जय जय देव तवागतं श्रियेति ॥ ५९ ॥
अनुनदि शिबिरं निवेश्य वंश्या वनविनिवारिततापनातपं तत् ।
प्रमदभरनिरस्तमार्गखेदाः प्रविविशुराश्रममाशु मन्त्रिणस्ते ॥ ६० ॥

---

१. महात्मा हि निजमपि गुणमपरेणोपकारमात्रकारिणा कृत मन्यते. २. लोहे. ३. अमात्याधमैः. ४. 'ति सविस्मय स यावन्‌‌छ्रवणसुखामश्र्णोत्तुरङ्गहेषाम्' इत्येव पाठः ख पुस्तके उपलभ्यते. ५. 'शी' ख.

चिरपरिहृतकार्मुकश्रमत्वादपचितमेचकिमद्युणाकिणेन ।
नरपतिरथ तं समं नमन्तं सचिवगणं समवीभवत्करेण ॥ ६१ ॥
नृपतिरयममी च मन्त्रिमुख्याः प्रमदसवाष्पदृशः परस्परेण ।
सुरकमलविलोकशर्म साक्षादुपनतमप्युपलेभिरे चिरेण ॥ ६२ ॥
कृतकुशलकथेषु पार्थिवोऽसौ प्रियसचिवेषु पुरस्कृतासनेषु ।
सरसिजवसतेरिव प्रभावं पितुरिव वत्सलतां यतेः शशंस ॥ ६३ ॥
चरनिकरनिवेदितप्रवृत्तेर्नृपतिवरस्य चिरानुरागरम्यः ।
निजनिजपितृपत्तनाच्चैनीयान्युवतिजनोऽपि समाजगाम तत्र ॥ ६४ ॥
सललितमवलोकितः स ताभिर्निहितनवाञ्जनया दृशा कृशाभिः ।
नरपतिरुदितानुरागसिन्धुश्चिरनिगृहीतमनङ्गमन्वगृह्णात् ॥ ६५ ॥
शुचिभिरथ समर्पितं स्वराज्यं क्षितिपगुरुर्गुरुदक्षिणीचकार ।
ऋषिरपि वरिवस्ययैव तुष्टः प्रतिवितितार सहाशिषा तदस्य ॥ ६६ ॥
अचकमत यदन्यदप्यभीष्टं नृपतिरपश्यदुपागतं तदग्रे ।
विघटयति यथा विधिर्विरुद्धो घटयति चाशु तथा प्रियं प्रसन्नः॥६७॥
कुलपतिवसतेः सुदुस्त्यजाया रणरणकं हृदि भाविनं दधानः ।
पुरगमनसमुत्सुकोऽपि न द्राग्मुनिमनुमानयितुं नृपः शशाक ॥ ६८ ॥
क्षितियतिवरयोस्तयोर्भविष्यद्विरहतरङ्गितबाष्परुद्धवाचोः ।
चलितुमनुमतिं ययाच पूर्वोऽप्यदित परः शिरसैव लोलितेन ॥ ६९ ॥
प्रथमगिममथापरान्महर्षिस्तपनसुगे हृदि चार्द्रतां दधानान् ।
अयमकृतभिदा प्रसादभक्त्या व्यथित न हव्यभुजो नमस्यान् ॥७०॥
सविति(?) न सुहृदः सुरकशावानय कथमप्यनुवर्तिनो निवर्त्य ।
ज्वलदनलनिभ शुभे मुहूर्ते सह सचिवैः प्रययाव चक्रवर्ती ॥ ७१ ॥

तस्य प्रयाणपटहध्वनिभिर्गभीर-
गर्जन्महागिरिगुहाविदितानुवादैः ।

---

१. [illegible] २ [illegible] ३ [illegible]
४. [illegible] ५ [illegible] ६. [illegible] ७. [illegible]
८. '[illegible]' [illegible]

सप्तापि तैस्त्रिसिपवस्तरणेस्तुरङ्गा
नीता कथंचिदपि सारथिना स्थिरत्वम् ॥ ७२ ॥
रङ्गत्तुरङ्गमसमूहसमुद्धतेन
भूपांशुना कलुषितप्रतिभूपकीर्तिः ।
द्विनैरहोभिरयमाकलयांचकार
सेनागजान्निजपुरोपवनद्रुमेषु ॥ ७३ ॥
आरुह्य द्विरदमुदग्रमुग्ररोचिः प्राचीनाचलमिव दर्शितोदयश्रीः ।
प्राविक्षत्प्रकृतिपुरं सरः पुरेऽसौ पौराणां हृदि च तदागमप्रमोदः ॥७४॥

इति श्रीगुर्जरेश्वरपुरोहितश्रीसोमेश्वरदेवविरचिते सुरथोत्सवनाम्नि महाकाव्ये
राज्यलाभो नाम चतुर्दशः सर्गः ।

पञ्चदशः सर्गः ।

अस्ति प्रशस्ताचरणप्रधानं स्थानं द्विजानां नगराभिधानम् ।
कर्तुं न शक्नोति कदापि यस्य त्रेतापवित्रस्य कलिः कलङ्कम् ॥ १ ॥
सत्तीर्थस्य सुराश्रितेन जगता यस्योपमा स्यात्कथं
स्वाध्यायैकनिधे(?)र्गर्तेश्रुतिवृतेनोर्वीतलेनापि वा ।
यत्सौधेषु विशुद्धिवर्जितवपुर्बालोऽपि नालोक्यते
वन्दे श्रीनगरं सदेतदखिलस्थानातिरिक्तोदयम् ॥ २ ॥
हृतनयनसुखैर्मखाग्निधूमैः श्रुतिकटुभिर्बटुवृन्दवेदपाठैः ।
कलिरकलितसमदः प्रदत्ते न खलु पदं विदुषां गृहेषु यत्र ॥ ३ ॥
चञ्चत्पञ्चमखाग्निभग्नतमसि स्थाने त्रिनेत्रानल-
ज्वालाप्रज्वलितप्रसूनधनुषा देवेन दत्तोदये ।
श्रीमत्ता च पवित्रता च परमामालोकयन्तः सुरा
स्वर्वासेऽप्यरसा रसामरजनव्याजेन भेजुः स्थितिम् ॥ ४ ॥
तस्मै सयमिनामिनाय मुनये नित्यं नमस्कुर्महे
यन्माहात्म्यमसह्यमाह स मुहुर्मुह्यन्मना कौशिकः ।

१ त्रसितुमिच्छव. २ आनन्दपुरम्. ३ देवा, मदिरा च. ४ सर्पाः, वेदग्रन्थाश्च. ५ भूदेवाः. ६ स्वामिने सूर्याय च. ७ उलूकः, विश्वामित्रश्च.

आविर्भूतमभूतपूर्वचरितश्रेष्ठाद्वशिष्ठात्ततः
सत्कर्मोद्धुरमध्वरस्थितिविदां स्थानेऽत्र गोत्रं महत् ॥ ५ ॥

येषामशेषाधिपतिः प्रसन्नः संनद्धपाणिः प्र(फ)णिकङ्कणेन ।
त एव संभूतिमिहाश्नुवन्ति [कुले] गुलेचा(वा)भिधया प्रसिद्धे ॥ ६ ॥

श्रीसोलशर्मा विमले कुलेऽत्र जन्म द्विजन्मप्रवरः प्रपेदे ।
यः स्वर्गिणः सोमरसेन यागे पितॄंश्च पिण्डैरपृणत्प्रयागे ॥ ७ ॥

सोलः सलीलमवनीमवतामसौ यः
सौवस्तिकोऽस्त्विति वरं स्मरता स्मरारेः ।
श्रीगुर्जरक्षितिभुजा किल मूलराज-
देवेन दूरमुपरुग्य पुरो दधे यः ॥ ८ ॥

यथा प्रतिष्ठां महतीं वशिष्ठस्तिग्मांशुवंशे भगवानवाप ।
निजेन सौवस्तिकतागुणेन चौलुक्यभूपालकुले तथासौ ॥ ९ ॥

विधिवद्वाजपेयं यः कलिकालेऽप्यकल्पयत् ।
कियतीं वा नयेयं तच्चरिताद्भुतसंहिताम् ॥ १० ॥

ऋग्वेदवेदी च श(क्र)तक्रतुश्च दत्तान्नदानश्च जितेन्द्रियश्च ।
तिरोहिते तत्र पुरोहितेन्द्रे तदङ्गजन्माजनि लल्लशर्मा ॥ ११ ॥

यः करोति स्म चामुण्डराजाख्यं नृपमाशिषा ।
द्वैतिभिर्मुक्तापसपत्नं हविषा च हविर्भुजम् ॥ १२ ॥

---

१. यज्ञविद्याविदाम्. २ ईश्वरः. ३ 'भुव' ख. ४ 'गुलेचा' इति स्थानाधारेण गोत्रव्यापदेशनाम प्रतीयते, परं च डॉक्टर-रामकृष्ण गोपाल भाण्डारकर-महाशयेषु १८८३-८४ वर्षाय'रिपोर्ट'-पुस्तके 'गुलेचा' इत्येव पाठ आश्रित. ५ अस्य मूलराजपुरोहितस्य सोलस्य समागमयोऽपि मूलराजराज्यसमय एव. ६. पुरोहित. ७. अयं मूलराजमहाराज वि० सं० ९९३-१०५३ वर्षेषु राज्यमकार्षीत्, इति Indian Antiquary Vol. XI. P 219 ८ अस्य चामुण्डराजपुरोहितस्य लल्लशर्मणः समागमश्च चामुण्डराजराज्यसमय एव ९. चामुण्डराजराज्यम्—वि० सं० १०५३-१०६६ १०. अद्भुतम्, ईश्वर ११. ईश्वरम्, पोताय.

श्रीमुञ्जनामा तनुजस्तदीय स्वय स्वयभूरिव भूतलेऽभूत्।
ब्राह्मण्यलाभाय तथा हि सद्भिरभाजि मौञ्जी रशनेव वृत्ति ॥ १३ ॥

सद्वशजातेन गुणान्वितेन शरासनेनेव पुरोहितेन।
एतेन मेने भुवने न किंचिन्न दुर्लभ दुर्लभराजदेवः ॥ १४ ॥

सतापशान्ति जगतोऽपि सोमस्तनन्दनश्चन्दनवच्चकार।
पीयूषहारी हरिणाङ्कितश्च सत्या बभाजे द्विजराजता य ॥ १५ ॥

यस्याशी प्रतिपादितोदययुजा श्रीभीमभूमीभुजा
क्षीरक्षालितशालितदु(ण्डु)लसित साक्षात्कृत तद्यश।
येनाशाक्रमणक्षमेण त इमे मूर्तिप्रभेदा प्रभो
र्भस्मोद्धूलनमन्तरेण धवला सर्वेऽपि निर्वर्तिता ॥ १६ ॥

भित्वा भानु तत्र ताते प्रयाते पुत्र श्रीमानामशर्मा बभूव।
कृत्वा सम्यक्संस्थसस्था क्रतूना क्रीता काम्रा येन संम्राडभिख्याम्॥ १७॥

सदा यदाशी परिपूर्णकर्ण श्रीकर्णनामा नृपति प्रकाण्डम्।
वसुधरामण्डलमर्णवान्त वान्तारिनारीनयनाम्बु चक्रे ॥ १८ ॥

दानानि तानि सदनानि च तानि शभो
रम्भोजराजिरुचिराणि सरासि तानि।
येनामुना मुनिजनानुकृताकृतानि
वित्तैश्चुलुक्यकुलसभवभूपदत्तै ॥ १९ ॥

---

१ अस्य दुर्लभराजपुरोहितस्य श्रीमुञ्जनाम्न सत्ताधारसमयस्तु दुर्लभराजराज्यसमय एव २ मौञ्जी वृत्तिरिति मुञ्जवद्वर्तमानाना ब्राह्मण्य भवतीत्यर्थ एतेन मुञ्जस्य सदाचारवमुक्त भवतीत्यर्थ अथ च मौञ्जी मेखला शरमयी रशना ब्राह्मण्यलाभाय सद्भिर्बध्यते ३ दुर्लभराजराज्यम्—वि० स० १०६६ १०७८ ४ अस्य भीमराजपुरोहितस्य सोमस्य जीवनसमयो भीमराजराज्यसमय एव ५ विष्णुना मृगेण च ६ बभञ्जे स्व ७ ब्राह्मण्यम् चन्द्रत्व च ८ भीमराजराज्यम्—वि० स० १०७८ ११२० ९ पृथिव्यादयोऽष्टौ १० शिवस्य ११ अस्य श्रीकर्णराजपुरोहितस्यामशर्मण स्थितिसमय श्रीकर्णराजराज्यसमय एव १२ अभिख्या माया १३ वाजपेययाजाति १४ श्रीकर्णराजराज्यम्—वि० स० ११२० ११५०

धाराधीशपुरोधसा निजनृपक्षोणीं विलोक्याखिलां
चौलुक्याकुलितां तदत्ययकृते कृत्या किलोत्पादिता ।
मन्त्रैर्यस्य तपस्यतः प्रतिहता तत्रैव तं मान्त्रिकं
सा संहृत्य तडिल्लता तरुमिव क्षिप्रं प्रयाता क्वचित् ॥ २० ॥

तस्मात्कुमारः सुकुमारमूर्तिमूर्तस्तपोराशिरिवोज्जगाम ।
स्वराजराज्योदयदायिनी वागुवास शंकेरिव यस्य वक्त्रे ॥ २१ ॥

बद्धः सिन्धुवसुंधरापतिरतिप्रौढप्रतापोऽपि य-
न्नीतः स्फीतबलोऽपि मालवपतिः कारां च दारान्वितः ।
दत्तः सोऽपि सपादलक्षनृपतिः पादानतिं शिक्षितः
श्रीसिद्धक्षितिपेन सैष विभवः सर्वोऽपि यस्याशिषाम् ॥ २२ ॥

कुशोपशोभितैर्यागैस्तडागैश्च परः शतैः ।
इष्टं पूर्तं च यश्चक्रे चक्रवर्तिपुरोहितः ॥ २३ ॥

ऋजुरोहितभर्तृपुरोहितात्यस्पृहयेव त्रिदिवं गतस्य तस्य ।
तनुभूर्मनुभूपतिप्रणीतस्मृतिसर्वस्वमवाप सर्वदेवः ॥ २४ ॥

मैध्वरेर्व्यधित साधु सपर्यामध्वरेषु जयति स्म सुरेशम् ।
मानवानविदितापरयाच्ञो मानयानकृत चैष कृतार्थान् ॥ २५ ॥

अंचिषामयनमीयुषि तत्र क्षत्रसत्त्वमनमस्करणीये ।
अध्यगामि विधिरामिगनाम्ना वैदिकैस्तदनु तत्तनुजेन ॥ २६ ॥

सत्कर्मनिर्माणरतेरमुष्य प्रीडानिदानं द्वयमेतदासीत् ।
स्ववर्णनाकर्णनमुत्तमेभ्यः संगारकारान्तरवस्थितिश्च ॥ २७ ॥

---

१. मालवाधिपतियशोवर्मणः पुरोहितेन मदेशभूमि गुर्जरराजश्रीसिद्धराजापरनामधेयजयसिंहदेवेन व्यापादयितुं कृत्या उत्पादिता. सा च आमशर्मणः पुरोपग. शान्तिमन्त्रैः प्रतिनिवृत्ता सती तमेव मालवाधिपतिपुरोहितं संहृत्य तिरोहितेति श्रूयते. २ शान्त्यर्थमिति पुन. ३. सोमेश्वरनामा. ४. यशोवर्मनामा ५ आनलदेवः ६ श्रीसिद्धराजापरपर्यायजयसिंहराज्यम्—वि॰ सं॰ ११५०—११९९. ७. यज्ञम्, इष्टेन. ८. पूर्तेन. ९. शिष्टेः. १०. अर्धमार्गं गतवति ११. अग्निहोत्रादि:

ज्येष्ठः श्रेष्ठतमः समस्तविदुषां श्रीसर्वदेवाह्वयः
श्रेयः संपदपास्तदुस्तरतमाः श्रीमान्कुमारोऽनुजः ।
मुञ्जोऽथ द्विजकुञ्जरस्तदनुजो न्यायाजडेनाहड-
श्चत्वारस्तनयास्तत. समभवन्वेदा इव ब्रह्मण ॥ २८ ॥

कुमारपालस्य चुलुक्यभर्तुरङ्गानि गङ्गासलिले निधाय ।
श्रीसर्वदेवेन गयाप्रयागविप्राः प्रदानेन कृताः कृतार्थाः ॥ २९ ॥

स्थाने स्थाने तडागानि शिवपूजा दिने दिने ।
विप्रे विप्रे च सत्कारः श्लाघा यस्य गृहे गृहे ॥ ३० ॥

राज्ञौ गृहीतोष्णकरे कुमारः कुमारपालस्य सुतेन राज्ञा ।
कृतोपरोधोऽपि परं पुरोधा. प्रत्यग्रहीत्तस्य न रत्नराशिम् ॥ ३१ ॥

यः शौचसंयमपटुः कटुकेश्वराख्य-
मोराध्य भूधरसुताघटितार्धदेहम् ।
तां दारुणामपि रणाङ्गणजातघात-
व्रातव्यथामजयपालनृपादपास्थत् ॥ ३२ ॥

विलोक्य दुष्कालवशेन लोकं कङ्कालशेषं सविशेषशूकः ।
श्रीमूलराजं दलिताविराजमचीकर(र)त्तत्करमोचनं य ॥ ३३ ॥

दुष्टारिकोटिकदनोत्कटराष्ट्रकूट-
कुल्येन शल्यितरणाङ्गणकौङ्कणेन ।

---

१ अस्य सिद्धराजपुरोहितस्य सर्वदेवस्य जीवनसमय सिद्धराजापरनाम जयसिंहराज्यसमय एव २ कुमारपालराज्यम्—वि० स० ११९९-१२३० ३ अस्य कुमारपालपुरोहितस्य कुमारस्य सत्तासमय कुमारपालराज्ये ४ अजयपालेन ५ सामन्तसिंहयुद्धे हि श्रीअजयपालदेवः प्रहारपीडया मृत्युकोटिमायात कुमारनाम्ना पुरोहितेन श्रीकटुकेश्वरमाराध्य पुन स जीवित ६ अजयपालराज्यम्—वि० स० १२३०१२३३. ७ शूक श्लक्ष्णतीक्ष्णाग्र शङ्कु. ८ मूलराजराज्यम्—वि० स० १२३३१२३५ ९ य किल कुमारः श्रीअजयपालपुत्रश्रीमूलराजसकाशाद्दुष्कालपीडितानां प्रजाना तदानीं करमोचन कारितवान् १० निहितकौङ्कणाधिपतिमल्लिकार्जुनेन

सर्वप्रधानपुरुषाधिपतिः प्रताप-
मल्लेन भूपतिममल्लिकया कृतो यः ॥ ३४ ॥

सेनानीर्विदधे कुमार इति यः शङ्के चुलुक्येन्दुना
जित्वा सोऽथ जवादथार्यतरसः प्रत्यर्थिपृथ्वीपतीन् ।
इष्टां तद्विषयर्धिमाशिषमिव प्रादात्पुरोधाः स्वयं
तस्मै याज्यमहीभुजे निजचमूवीरव्रजैरक्षतैः ॥ ३५ ॥

धाराधीशे विन्ध्यवर्मण्यवन्ध्यक्रोधाध्मातेऽप्याजिमुत्सृज्य याते ।
गोगस्थानं पत्तनं तस्य भङ्क्त्वा सौधस्थाने खानितो येन कूपः ॥ ३६ ॥

गृहीतं कुप्यता कुप्यं मालवेश्वरदेशतः ।
दत्तं पुनर्गयाश्राद्धे येनाकुप्यमकुप्यता ॥ ३७ ॥

जित्वा म्लेच्छपतेर्बलं तदतुलं राज्ञी सरःसंनिधौ
स्वःसिन्धोः सलिलैर्विधाय विधिवत्प्रीतिं पितॄणामपि ।
दानी मोक्षमनुक्षलक्षितितले कृत्वाब्दमब्दव्रजे
राजार्थे रचयांचकार चतुरः स्वार्थे प्रजार्थे च यः ॥ ३८ ॥

यः कर्माणि च षड्गुणांश्च तनुते तद्भूर्भुवःस्वस्त्रयं
कीर्तिर्यस्य च यश्च निर्मलरुचिर्नो जातुचिन्मुञ्चति ।
शस्त्राविष्कृतिरध्वरे च युधि च श्लाघ्योज्जिहीते यतः
सूत्रं यस्य हृदि स्फुरत्यविरतं ब्राह्मं च राज्यस्य च ॥ ३९ ॥

अरुन्धतीव कान्तास्य पत्युराज्ञामरुन्धती ।
अभूदभिधया लक्ष्मीः साक्षाल्लक्ष्मीरिव क्षितौ ॥ ४० ॥

आदिमः प्रशमन्दिरं महादेव इत्यभिधया तदङ्गभूः ।
येन पाणिनिहितेन पङ्कजेनेव तुष्यति परं सरस्वती ॥ ४१ ॥

सोमेश्वरदेव इति क्षितिदेवस्यास्य बन्धुरनुजन्मा ।
अजनि कनिष्ठस्तस्य भ्राता ख्यातान्वयो विजयः ॥ ४२ ॥

---

१. वीरदेशमगद्दिम्. २. अनर्णाद्दलण्डुलं, अराग्दितथ. ३. अथ विन्ध्यवर्मा यशोवर्मणः पौत्रः.

तैस्त्रिभिः प्रथममध्यमोत्तमैः स्वे पदे च पुरुपैर्व्यवस्थितैः ।
शब्दशास्त्रमिव गोत्रमुच्चकैः सत्क्रियं समजनिष्ट विष्टपे ॥ ४३ ॥

सोमेश्वरदेवकवेरवेत्य लोकंपृणं गुणग्रामम् ।
हरिहरसुभटप्रभृतिभिरभिहितमेवं कविप्रवरैः ॥ ४४ ॥

श्रीसोमेश्वरदेवस्य कवितुः सवितुश्च कौ ।
स तृणाभ्यवहारस्य निरासेऽपि रसप्रदा ॥ ४५ ॥

वाग्देवतावसन्तस्य कवेः श्रीसोमशर्मणः ।
धुनोति विबुधान्सूक्तिः साहित्याम्भोनिधेः सुधा ॥ ४६ ॥

तव वक्त्रं शतपत्रं सद्वर्णं सर्वशास्त्रसंपूर्णम् ।
अवतु निजं पुस्तकमिव सोमेश्वरदेववाग्देवी ॥ ४७ ॥

वसिष्ठानिष्ठायाः पदमिति जगत्यस्ति पटहः
प्रकृष्टास्त्वेषामप्यजनिषत मुञ्जप्रभृतयः ।
कुले जातोऽप्येषां शतधृतिदुहित्रा पुनरयं
स्वयं पुत्रीचक्रे नवकविगुणप्रीणितहृदा ॥ ४८ ॥

काव्येन नव्यपदपाकरसास्पदेन
यामार्धमात्रघटितेन च नाटकेन ।
श्रीभीमभूमिपतिसंसदि सभ्यलोक-
मस्तोकसंमदवशंवदमादधे यः ॥ ४९ ॥

कवीन्द्रपदवीस्पृहामहह तेऽपि तन्वन्ति य-
द्वचःक्रकचकर्कशं प्रथयति व्यथां कर्णयोः ।
कविः स विरलः पुनर्भुवि भवादृशो दृश्यते
सुधाभिरभिषेचनं रचयतीव यः सूक्तिभिः ॥ ५० ॥

---

१. अथ श्रीहर्षवद्यो हरिहरो वीरधवलराजसमीपे नैषधपुस्तकं प्रथमं वस्तुपालेऽमात्ये समानयत्—इति हरिहरप्रबन्धे प्रबन्धकोशे स्फुटमुपलभ्यते. २. भीमदेवराज्यम्—वि० सं० १२३५-१२९८; एतत्पुनस्त्रिभुवनपालराज्यम्—वि० सं० १२९८-१३००

मन्दश्छन्दसि कोऽपि कोऽपि विकलः सालंकृतिर्व्याकृता-
　　वर्थे कोऽपि वृथाश्रमो रसनिधावन्धः स कोऽप्यध्वनि ।
वक्रान्तर्विहरद्भिरञ्चितनयामञ्जीरमञ्जुस्वर-
　　स्पर्धाबन्धुभिरेक एव कवते काव्यैः कुमारात्मजः ॥ ११ ॥

वैदुष्यं विगताश्रयं श्रितवति श्रीहेमचन्द्रे दिवं
　　श्रीमत्ह्लादनमन्तरेण विरतं विश्वोपकारव्रतम् ।
दृष्ट्वा तद्द्वयमत्र मन्त्रिमुकुटे श्रीवस्तुपाले कवि-
　　स्तत्कीर्तिस्तुतिकैतवादिति मुदामुद्धारमारब्धवान् ॥ १२ ॥

प्राग्वाटान्वयवारिधौ विधुरिव श्रीचण्डपः प्रागभू-
　　त्संभूतोऽद्भुतसत्यशौचसदनं चण्डप्रसादस्ततः ।
सोमस्तत्तनयो नयोज्ज्वलमतिस्तस्याश्वराजः सुतः
　　पृतारमाथ तदङ्गभूः सुकृतभूः श्रीवस्तुपालोऽभवत् ॥ १३ ॥

उत्फुल्लमल्लीप्रतिमल्लकीर्तिः श्रीमल्लदेवोऽभवदग्रजन्मा ।
बभूव तस्यावरजश्च तेजःपालाभिधानः सचिवप्रधानम् ॥ १४ ॥

श्रीवस्तुपालस्य चिरायुरस्तु दिशां प्रकाशं दिशते सदा यः ।
कर्पूरकिर्मीरितकेरलस्त्रीरदावदातद्युतिभिर्यशोभिः ॥ १५ ॥

क्षीणे चक्षुषि भेषजं भगवती पालीश्वरी देहिनां
　　देहे चित्रविचित्रभाजि शरणं श्रीवैद्यनाथः प्रभुः ।
संसारज्वरजर्जरे हृदि सदा विष्णुर्भविष्णुर्मुदे
　　दौर्गत्ये च जिघांसिते भविरसौ श्रीवस्तुपालः पुनः ॥ १६ ॥

न वदति परुषा रुषापि वाचः स्पृशति परस्य न मर्म नर्मणापि ।
विरमति मतिमानमान्यपन्थाः क्वचन च नार्थिकदर्थनाविधानात् ॥ १७ ॥

---

१. अयं कुमारस्य पुत्रः सोमेश्वरदेवपर्वाः. [illegible] २. हे. मचन्द्रस्य कुमारपालराज्ये वि० सं० १२२९ वर्षे स्वर्गगमनम्. ३. अत्र प्रकृत- कुमारदेवः सोमेश्वरदेवस्तु कुमारस्य पु०.

धनमनवरतक्षितीन्द्रसेवाश्रमसमवाप्तमयत्नतोऽपि दत्ते।
अपरमपि परोपकारकं यद्विमृशति वस्तु तदेव वस्तुपालः॥ ५८॥

सत्यं ब्रुवे भवतु मा क्षतिरत्र काचि-
द्भूत्वा खलप्रकृतिनापि मयातिमात्रम्।
मन्त्री समे च विषमे च परीक्षितोऽसौ
दृष्टं न दुष्टमिह किंचन सच्चरित्रे॥ ५९॥

अयमनुदिनदानोत्कर्षितप्राणपर्ष-
त्परिचरितचरित्रः स्वस्तिमानस्तु मन्त्री।
तुहिनकरसमानैर्यस्य कीर्तिप्रतानै-
रजनिषत रजन्यः प्रासराकाविपाकाः॥ ६०॥

लभन्ते लोकतः पापाः शापानन्ये नियोगिनः।
अधिकारमधिकारममात्यः शास्त्यसौ पुनः॥ ६१॥

त एव स्तूयन्ते नृपतिपशुभिर्धीवरतया
प्रजानामानायः सपदि खलु येभ्यः प्रपतति।
तदित्थं सुस्थानां चकितचकितं क्वापि वसता
सता संप्रत्येकः सचिवशिवतातिर्भुवि भवान्॥ ६२॥

अर्थदानदलितार्थिदुःस्थितिं त्वां विना विनयनम्र संप्रति।
मृज्यते जगति केनचित्सतां वस्तुपाल न कपालदुर्लिपिः॥ ६३॥

गोमयरसानुलिप्ते कीर्तिसुधाधवलिते च भवनगृहे।
श्रीवस्तुपाल भवतश्चकास्ति चित्रं चरित्रमिह॥ ६४॥

पीयूषैः प्रणता हिमैः प्रणिहिता ताराभिराराधिता
गङ्गावीचिभिरर्चिता परिचिता दिग्दन्तिदन्तांशुभिः।
कर्पूरैः परिशीलिता मलयजैरावर्जिता मण्डिता
डिण्डीरस्तबकैर्बकैरनुसृता मन्त्रीश कीर्तिस्तव॥ ६५॥

प्रवर्तमानेऽत्र कवित्वसत्रे सत्कृत्य सत्पात्रममात्यमेवम्।
कृतार्थमात्मानमसावमंस्त सौवस्तिको गुर्जरनिर्जराणाम्॥ ६६॥

कुमारपुत्रेण कुमारमातुः काव्यं तदेतज्जगदेकदेव्याः ।
श्रुतिस्मृतिव्याकृतियज्ञविद्याविशारदेन क्रियते स्म तेन ॥ १७ ॥

इति श्रीगुर्जरेश्वरपुरोहितश्रीसोमेश्वरदेवविरचिते सुरथोत्सवनाम्नि महाकाव्ये
कविप्रशस्तिवर्णनो नाम पञ्चदशः सर्गः ।

---



समाप्तं चेदं काव्यम् ।

---

१. कुमारनामकपुत्र. पुत्रेण सोमेश्वरदेवेन २. कुमारः [illegible]
[illegible]